## प्रथम भाग

### ( प्राक् सिद्धान्तकाल )

(क) वैदिक ज्योतिष (६००० ई० पू० २५०० ई० पू०)

(विश्वोत्पत्ति, पृथ्वी का गोलत्व, कल्प, युग, वर्ष, सायन, चान्द्र, सौर मास, अयन, ऋतु, मासों के चैत्रादिमास, पूर्णिमान्त, अमान्त, दिवस तिथि, चन्द्र, सूर्य, गति, वार, दिनमान, मुहूर्त, नक्षत्र, ग्रह, उल्का, शुभकाल, वर्षारम्भ।)

(ख) वेदाङ्ग ज्यौतिष (३००० ई० पू० १००० ई० पू०)

[ अ ]

१. ऋग् ज्योतिष, २. यजुर्वेद ज्योतिष, ३. अथर्ववेद ज्योतिष, ४. कल्पसूत्र, ५. निरुक्त, ६. पाणिनीय व्याकरण ( संवत्सर, अयन, ग्रह चार, घटी, पल, मुहूर्त, ऋतु, पक्ष, नक्षत्रगणना, संवत्सराधिप, सूर्यनक्षत्रगणना, मेषादि राशियाँ, काल के त्रुट्यादि सूक्ष्म-विभाग, अधिमास, क्षयमास, लग्न, बलदिन, शंकु, छायागणित, अंकगणित तथा कुण्डोपयोगी-रेखागणित )।

[ ब ]

१. स्मृतिशास्त्र २. रामायण ३. महाभारत
( युगादि व्यवस्था, चार क्रान्तिवृत्त के १२ भाग, योग, नक्षत्र, ग्रहण, ग्रह वक्रगति, ग्रहयुति, ग्रहयुद्ध, विविधयोग, फलित-ज्योतिष )

## द्वितीयभाग

### सिद्धान्त-काल ई० पू० १००० से ई० पू० ५०० तक

### ( ज्यौतिष सिद्धान्तों का विधिवत् सर्वाङ्गीण विवेचन )

### (क) गणितस्कन्ध

**शुद्धगणित**

अङ्कगणित, बीजगणित, रेखागणित, ज्योत्पत्ति रूपेण त्रिकोणमिति, सिद्धान्त ग्रन्थों के तत्सम्बन्धी अध्याय, लीलावती, वीजगणित जो निम्न आचार्यों के प्रसिद्ध हैं—ब्रह्मगुप्त, पद्मनाभ, श्रीधर, भास्कर।

**ग्रहगणित**

सिद्धान्त ज्योतिष, करण गणित (ज्योतिष के मूल-सिद्धान्तों की गणितीय उपपत्तियाँ।)

प्रसिद्ध ग्रन्थः—

१. पितामह सिद्धान्त ई०पू० १००० लगभग
२. वसिष्ठ सिद्धान्त ई० पू० ५०० लगभग

३. रोमक सिद्धान्त ई० पू० १५० लगभग
४. पुलिशि सिद्धान्त (अनुपलब्ध)
५. सूर्य सिद्धान्त (४२० शक पू०)
६. आर्यभटी (४२० शक)
७. सिद्धान्त पंचशिका (४२७ शक)
८. ब्रह्मस्फुटसिद्धान्त (५२० शक)
९. श्रीवृद्धिद तन्त्र (५६० शक)
१०. सिद्धान्त शेखर (६१ शक)
११. सिद्धान्त शिरोमणि (१०३६ शक)
१२. सिद्धान्ततत्त्वविवेक।

### संहिता

(राष्ट्र विषयक शुभाशुभ फल)

प्रसिद्धग्रन्थ—

१. वाराही संहिता (४२७ शक),
२. गर्ग संहिता,
३. पराशर संहिता,
४. बृहद् गर्ग संहिता,
५. वसिष्ठ संहिता,
६. बृहस्पति संहिता
७. सारस्वत संहिता

(२–७) टीका ग्रन्थों में इनके उद्धरण हैं। मूल पुस्तकें अनुपलब्ध हैं

### मुहूर्त

(संस्कार तथा यात्रादि मुहूर्त)

प्रसिद्ध ग्रन्थ—

१. रत्नकोष ५६० शक,
२. रत्नमाला ६६१ शक,
३. राजमार्तण्ड ६६४ शक,
४. अद्भुत-सार १०९० शक,
५. व्यवहारप्रदीप ६६४ शक,
६. ज्योतिर्विद्याभरण ११६४ शक,
७. विवाहवृन्दावन ११८२ शक,
८. विवाह पटल १४०० शक,
९. मुहूर्ततत्त्वम् १४२० शक,
१०. ज्योतिर्निबन्ध १४४० शक,
११. ज्योतिष-दर्पण १४६९ शक,
१२. मुहूर्त मार्तण्ड १४९३ शक,
१३. तोडरानन्द १५०६ शक,
१४. मुहूर्तचिन्तामणि १५२२ शक,
१५. मुहूर्तमाला १५८२ शक।

## (ख) होरा स्कन्ध

(जन्म लग्न से मनुष्य का शुभाशुभ)

प्रसिद्ध ग्रन्थः

१. जैमिनि सूत्र (आर्ष)
२. पाराशरी (आर्ष),

### ताजिक

(वर्षलग्न से मनुष्य का शुभाशुभ)

प्रसिद्ध ग्रन्थः

१. ताजिक भूषण पद्धति १४८० शक,
२. ताजिक पद्धति,

३. भृगुसंहिता ( आर्ष ),
४. बृहज्जातक ४२७ शक,
५. जातक पद्धति ११८५ शक,
६. जातका भरण १४६० शक,
७. जातक पद्धति १४८० शक,
८. होरा स्कंध निरूपण १४९० शक,
९. जातकालंकार १५३५ शक,
१०. पद्मजातक १५४९ शक,
११. होरापटल १५९६ शक,
१२. होरा कौस्तुभ १६०० शक,
१३, नर जातक व्याख्या १६६० शक ।

३. ताजिकसार १४४५ शक,
४. ताजिक नीलकण्ठी १५०७ शक ।

गणित का महत्त्व-ज्योतिः शास्त्रफलं, पुराणगणकैरादेश इत्युच्यते,
नूनं लग्न बलाश्रितः पुनरयं तत् स्पष्ट खेटाश्रयम् ।
ते गोलाश्रयिणोऽन्तरेण गणितं गोलोऽपि न ज्ञायते,
तस्माद् यो गणितं न वेत्ति स कथं गोलादिकं ज्ञास्यति ॥
——सिद्धान्तशिरोमणि गोलाध्याय)

पुराने ज्योतिषियों ने कहा है कि ज्यौतिष के ज्ञान से भूत, वर्तमान तथा भविष्यत् फल को कहा जा सकता है, किन्तु उसके लिए लग्नबल जानने की आवश्यकता है। लग्न की स्थिति स्पष्ट ग्रहों से ज्ञात होती है। गोल ( खगोल-विज्ञान ) के ज्ञान से ही स्पष्ट ग्रहों का ज्ञान हो सकता है। बिना गणित के गोल का ज्ञान नहीं हो सकता। जो गणित नहीं जानता वह गोलादिक का कैसे ज्ञान प्राप्त कर सकता है !

पृथ्वी की दैनंदिन गति–

अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् ।
अचलानि भानि तद्वत् समपश्चिमगतीनि लङ्कायाम् ॥
—( आर्यभटी गोलपाद )

जिस प्रकार नाव में बैठे हमों (अनुलोमगति) पुरुष को स्थिर वस्तुयें विलोमगति से जाती प्रतीत हैं, उसी प्रकार ( जल पृथ्वी स्थिति ) द्रष्टा को अचल नक्षत्र भी समगति से श्रीलंका (निरक्ष देश) के पश्चिम की ओर प्रतीत होते हैं।

## गुरुत्वाकर्षण सिद्धान्त

आकृष्टिशक्तिश्च मही तया यत् स्वस्थं गुरु स्वाभिमुखं स्वशक्त्या ।
आकृष्यते तत् पततीव भाति समे समन्तात् क्व पतत्वियं खे ॥ ६ ॥

पृथ्वी में आकर्षण की शक्ति है उससे वह आकाश की ओर ऊपर फेंकी हुई भारी वस्तुओं को अपनी ओर आकृष्ट कर लेती है और हमें प्रतीत होता है कि वह वस्तु नीचे गिर रही है……।

अङ्ग विद्या का

# विषयक्रम

## १. राजयोगसङ्गतिक सामुद्रिक अध्याय

## पद्मपुराणान्तर्गत काशीखण्ड में निरूपित

## २. स्त्रियों के अङ्गों का फलादेश

शिवपुराणान्तर्गत गणेश विवाह प्रस्ताव में

३. कन्यालक्षण



आचार्य केशवदैवज्ञ विरचित

मुहूर्ततत्त्व ग्रन्थ से उद्धृत

४. स्त्री-पुरुष के लक्षण



ग्रन्थ का परिशिष्ट अंश

# मंगलाचरणम्

नगजाङ्कसमुद्भूतं गजाननमहर्निशम् ।
सिद्धिबुद्धिप्रदं देवं वन्दे विघ्नहरं परम् ॥ १ ॥
सर्वशास्त्रार्थतत्त्वज्ञां वीणापाणिं सरस्वतीम् ।
नमामि वरदां देवीमज्ञानध्वान्तशान्तये ॥ २ ॥
ईशानं सर्वविद्यानामीश्वरं सर्वप्राणिनाम् ।
विश्वेशं कलये स्वान्त-निलयेऽभीष्टदायकम् ॥ ३ ॥

## टीकाकर्तु: वंशपरिचय:

देवार्य(देवरिया)मण्डले रम्ये सरय्वाश्चोत्तरे तटे।
पिण्डीग्रामो द्विजेन्द्राणां शाण्डिल्यान्वयजन्मनाम् ।१॥
वासभूमिः, कलेर्भीतो धर्मो यत्र विराजते ।
वेदं शास्त्रं च संगृह्य संस्कृतिः सुप्रतिष्ठिता ॥ २ ॥
गोमतीसलिले पूते सेविते विप्रमण्डले ।
ग्रामे 'वसिरहा' नाम्नि जौनपूरप्रमण्डले ॥ ३ ॥
तस्मिन् 'वसिरहा' ग्रामे आगताः पूर्वजा इमे ।
तत्राभूत् सर्वशास्त्रेषु निष्णातः पण्डिताग्रणीः ॥ ४ ॥
श्यामाचरणदैवज्ञो मर्मज्ञः सर्वकर्मणाम् ।
बुधः काशीं समागत्य नवीनां वसतीं शुभाम् ॥ ५ ॥
निर्माय वासमकरोद् विद्वत्प्रीतिविवर्धनः ।
ज्योतिःशास्त्राब्जमार्तण्डो दिष्टज्ञो विष्टपे श्रुतः ॥ ६ ॥
अयोध्यानाथशर्माऽभूत् तत्सूनुः सम्मतः सताम् ।
"महामहोपाध्याये"ति पदवीं यस्तु लब्धवान् ॥ ७ ॥
तत्सुतो रघुनाथोऽभूत् दैवज्ञानां शिरोमणिः ।
तत्पुत्रोऽमरनाथोऽभूत् ज्योतिःशास्त्रविशारदः ॥ ८ ॥
तस्माज्जातास्त्रयः पुत्रास्तेष्वहं मध्यमः सुतः ।
आचार्यः फलिते ज्योतिःशास्त्रे, विद्वदुपासकः ॥ ९ ॥
एतान् स्वपूर्वजान् नत्वा ध्यात्वा गुरुपदाम्बुजे ।
शशीन्दुटीकां तन्वेऽहमिन्दुनाथः सतां मुदे ॥ १० ॥
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये शुभे ।
ज्योतिःशास्त्रविभागीयोपाचार्यः फलिते पटुः ॥ ११ ॥

## दैवज्ञशिरोमणिः पण्डितरघुनाथशर्मा, ज्यौ० आ०



वाराणसेया विद्वांसो दैवज्ञा यस्य शिष्यताम् ।
सम्प्राप्य कृतिनो जाताः सोऽयमस्मत्पितामहः ॥
रघुनाथशर्मा, तत्पादयुग्मे कृतिमिमामहम् ।
वाक्सरोजस्रजं स्नेहादिन्दुनाथः समर्पये ।

इस ग्रन्थ के सम्पादक

## डॉ० इन्दुनाथशर्मा, विद्यावारिधि



विदित वंश अवधेश को, सुत सपूत रघुनाथ।
तिन के सुत श्रीअमरपति, उन के इन्दुनाथ ॥

# अंगविद्या

## १. राजयोगसंगतिकसामुद्रिकाध्यायः

राजयोगस्य लक्षणानि स्थानानि च

**प्रसूतिकाले प्रबला यदि स्युर्नृपालयोगाः पुरुषस्य यस्य।**
**सद्राजचिह्नानि पदे तदीये भवन्ति वा पाणितलेऽमलानि ॥ १ ॥**

यस्य पुरुषस्य=जातकस्य, प्रसूतिकाले=जन्मसमये, प्रबलाः=बलयुक्ताः, नृपालयोगाः=राजयोगाः, स्युः=भवेयुः, तदीये=तस्य पुरुषस्य, पदे=चरणे सद्राजिह्नानि=शुभसूचकानि निर्मलराजयोगकारकचिह्नानि, भवन्ति=दृश्यन्ते। पाणितले=हस्ते (करतले) अपि अमलानि राजयोगसूचकचिह्नानि रेखादीनि परिलक्ष्यन्ते ॥ १ ॥

राजयोग के लक्षण एवं स्थान—

जिस जातक के जन्म-समय में प्रबल राजयोग होते हैं उस पुरुष के हाथों और पैरों में राजयोग प्रस्फुटित करने वाली निर्मल (स्पष्ट) रेखायें होती हैं ॥ १ ॥

**अनामिका मूलगता प्रशस्ता सा कीर्तिता पुण्यविधानरेखा।**
**मध्याङ्गुलेर्या मणिबन्धमाप्ता,राज्याप्तये सा च किलोर्ध्वरेखा॥ २ ॥**

(यस्य पुरुषस्य) जातकस्य, अनामिकामूलगता=अनामिकामूलमारभ्य या रेखा मणिबन्धं यावद् गच्छति सा प्रशस्ता=अतिशुभप्रदात्री, पुण्यविधानरेखा शास्त्रकारैः कीर्तिता=कथिता इत्यर्थः। तथा मध्याङ्गुलिमारभ्य मणिबन्धपर्यन्तं या रेखा गता सा ऊर्ध्वरेखा कथ्यते। सा राज्यप्राप्तिसूचिका रेखा भवति ॥ २ ॥

जिस पुरुष की अनामिका (तृतीय अँगुलि) के मूल भाग से लेकर मणिबन्ध पर्यन्त 'पुण्यविधाना' नाम की रेखा होती है, वह पुण्य प्रदान कराने वाली उत्कृष्ट रेखा होती है। तथा जो मध्यमा अँगुली से प्रारम्भ होकर मणिबन्ध तक जाती है वह "ऊर्ध्वरेखा" कहलाती है, इसका फल राज्यप्राप्तिकारक होता है ॥ २ ॥

**विराजमानं यवलाञ्छनं चेदङ्गुष्ठमध्ये पुरुषस्य यस्य।**
**भवेद् यशस्वी निजवंशभूषो भूषाविशेषैः सहितो विनीतः ॥ ३ ॥**

यस्य पुरुषस्य=जातकस्य, अङ्गुष्ठमध्ये यवाकृतिः भवेत्, स जातकः यशस्वी=कीर्तिमान्, निजवंशभूषः=स्वकुलस्य आभूषणस्वरूपः=कुले प्रधान-

पुरुषो भवति, स्वयं भूषाविशेषैः=वस्त्रालङ्कारादिभिः परिपूर्णो विनीतश्च भवति ॥ ३ ॥

जिस जातक के अँगूठे के मध्य में यव ( जौ ) के समान रेखा हो वह जातक यशस्वी, कीर्तिमान् अपनी वंश-परम्परा में श्रेष्ठ (प्रधान) एवं समस्त ऐश्वर्यों से युक्त तथा नम्र स्वभाव वाला पुरुष होता है ॥ ३ ॥

**चेद् वारणो वाऽऽतपवारणं वा वैसारिणः पुष्करिणी सृणिर्वा ।**
**वीणा च पाणौ चरणे नराणां ते स्युर्नराणामधिपा वरेण्याः ॥ ४ ॥**

( येषां ) जातकानां=नराणां पाणौ=चरणे च=हस्तचरणयोर्मध्ये वारणः=हस्ती, आतपवारणम्=छत्रम्, वा=अथवा, वैसारिणः=मत्स्यः, पुष्करिणी=खातम् ( लघुजलाशयः ), सृणिः=अंकुशः, वीणा वा=वाद्ययन्त्रम् इव चिह्नं भवति, ते वरेण्याः=श्रेष्ठाः, नराणाम् अधिपाः=राजानः स्युः ॥ ४ ॥

जिनके हाथ और पैरों के तलवों में हाथी, छाता, मछली, छोटे तालाब, वीणा और अंकुश के चिह्न हों तो वे श्रेष्ठ राजा होते हैं ॥ ४ ॥

**आदर्शमाला-करवाल-शैल-हलाश्च यत्पाणितले मिलन्ति ।**
**स्यान्मण्डलीकोऽवनिपालको वा कुले नृपालः कुलतारतम्यात् ॥ ५ ॥**

यस्य ( जातकस्य ) पाणितले=हस्ते=करतले आदर्शः=दर्पण इव, माला=जपमालिका इव, करवालः=खड्गः ( कमण्डलुः ) इव, शैलः=पर्वत इव, हलः=कृषिकर्षणयन्त्रमिव चिह्नानि मिलन्ति=प्राप्यन्ते, स जातकः, कुलतारतम्यात्=स्वकुलानुसारेण, माण्डलिकः=कतिपयराज्ञां संरक्षकः, अवनिपालकः=पृथ्वीपतिर्वा भवति ॥ ५ ॥

जिस जातक के हाथ में शीशा ( दर्पण ), माला, कमण्डलु, खड्ग, पर्वत और हल के समान चिह्न हों वह अपने कुलानुसार माण्डलिक राजा या पृथ्वीपति होता है ॥ ५ ॥

**चेद् यस्य पाणौ चरणे च चक्रं धनुर्धराब्जव्यजनासनानि ।**
**रथाश्च दोलाः कमलाविलासात् तस्यालये स्युर्गजवाजिशालाः ॥ ६ ॥**

यस्य=जातकस्य, चेत्=यदि, पाणौ=करतले, चरणे च=पादे च, चक्रं=चक्राकारम्, धनुः=चापः, धराब्जम्=कमलम्, व्यजनम्=ऊष्मानिवारकं तालपत्रम्, आसनानि=उपवेशनसाधनस्वरूपाणि, इमानि चिह्नानि विराजन्ते, तर्हि कमलाविलासात्=लक्ष्मीकृपातः, तस्य=जातकस्य आलये=गृहे रथाः दोलाश्च भवन्ति। सहैव गजवाजिशालाः=गजानां=हस्तिनां वाजिनां=हयानां च शालाः=निवासस्थानानि भवन्ति ॥ ६ ॥

जिस जातक के हाथ-पैरों में चक्र, धनुष, कमल, पखा और आसन के चिह्न होते हैं, उसके घर में लक्ष्मी की कृपा से रथ, घोड़े, दोला या पालकी (झूला लकड़ी एवं लोहे से निर्मित ) और हाथियों के निवास का स्थान होता है ॥ ६ ॥

**स्तम्भस्तु कुम्भस्तु तरुस्तुरङ्गो गदा मृदङ्गोंऽध्रि-करप्रदेशे।**
**दण्डोऽथवाऽखण्डितराज्यलक्ष्म्या स्यान्मण्डितः पण्डितशौण्डिको वा॥७॥**

(यस्य) हस्तचरणयोः स्तम्भः=कदलीस्तम्भ इव, अथवा अन्यस्तम्भवत्, कुम्भः=घटः, तरुः=वृक्षः, तुरङ्गः=अश्वः, गदा=युद्धकार्ये प्रयुक्तोऽस्त्रविशेषः, मृदङ्गः=वाद्ययन्त्रविशेषः, इमानि चिह्नानि सन्ति स अखण्डराज्यस्य=अखण्डलक्ष्म्याश्च भोक्ता भवति, अथवा पण्डितेषु मूर्धन्यपण्डितो भवति ॥ ७ ॥

जिसके हाथ अथवा पैरों के तलवे में खम्भा, घड़ा, वृक्ष, घोड़ा, गदा, अथवा मृदंग के चिह्न हों तो वह अखण्ड राज्यलक्ष्मी को भोगने वाला अथवा मूर्धन्य पण्डित होता है ॥ ७ ॥

**सुवृत्तमौलिस्तु विशालभालश्चाकर्णनीलोत्पलपत्रनेत्रः।**
**आजानुबाहुं पुरुषं तमाहुर्भूमण्डलाखण्डलमार्यवर्याः ॥ ८ ॥**

( यस्य जातकस्य ) मौलिः=शिरः, सुवृत्तम्=वर्तुलाकारम्, विशाल-भालः=विस्तृतमस्तकः, आकर्णनीलोत्पलपत्रनेत्रः=नीलोत्पलस्य पत्रं नीलोत्पलपत्रं तद्वदेव आकर्णपर्यन्तम् नेत्रे यस्य सः=विशाललोचनः, आजानुबाहुः=जानुपर्यन्ते लम्बायमानबाहू स्याताम्, एतादृशं पुरुषम् आर्यवर्याः =श्रेष्ठा मुनिजनाः, 'पृथ्वीमण्डलस्य राजा भवति' इति कथयन्ति ॥ ८ ॥

जिस जातक का शिर गोल, मस्तक बड़ा, नीलकमल के समान कर्णपर्यन्त बड़े नेत्र, या जानु ( घुटना ) पर्यन्त लम्बी भुजाएँ हों ऐसे व्यक्ति को श्रेष्ठ मुनिजन 'पृथ्वीमण्डल का इन्द्र' कहते हैं ॥ ८ ॥

**नरस्य नासा सरला च यस्य वक्षःस्थलं चापि शिलातलाभम्।**
**नाभिर्गभीरातिमृदू भवेतामारक्तवर्णौ चरणौ स भूपः॥ ९ ॥**

यस्य=नरस्य (जातकस्य), नासा=नासिका, सरला=ऋजुः, वक्षः-स्थलम्=हृत्प्रदेशः, शिलातलाभम्=पाषाणतलमिव कठोरम्, नाभिः गभीरा, आरक्तवर्णौ चरणौ=उभावपि चरणौ रक्तवर्णौ अतिमृदू=अतिकोमलौ च भवेताम्, सः भूपः=राजा ( पृथ्वीपतिः ) भवति ॥ ९ ॥

जिस पुरुष की नाक सीधी हो, पत्थर के समान कठोर वक्षःस्थल हो, नाभि ( तोंदी ) गम्भीर ( गहरी ) हो, चरण ( दोनों पैरों के तलवे ) लाल और कोमल हों वह पृथ्वीपति ( राजा ) होता है ॥ ९ ॥

**प्रसन्नमूर्तिः समुदारचेता वंशाभिमानः शुभवाग्विलासः।**
**अनीतिभीरुर्गुरुसाधुनम्रः, साम्राज्यलक्ष्मीं लभते मनुष्यः॥ १०॥**

( यो हि जातकः ) प्रसन्नमूर्तिः=सर्वदा प्रसन्नचित्तः, उदारचेताः=परोपकारकरणे प्रवृत्तः, वंशाभिमानः=श्रेष्ठवंशे समुत्पन्नः, शुभवाग्विलासः=कल्याणमयवाणीयुक्तः, अनीतिभीरुः=अन्याय्यमार्गाद् भयभीतः, गुरुसाधुनम्रः=गुरुजनान् सज्जान् प्रति साधुः, विनम्रश्च स्यात् एतादृशो मनुष्यः, साम्राज्यलक्ष्मीम्=साम्राज्यं लक्ष्मीं च लभते॥ १०॥

जो जातक प्रसन्नचित्त रहने वाला, बड़े उदारचित्त वाला ( परोपकारी ), श्रेष्ठ वंश में उत्पन्न हो या जो कल्याणकारी वाणी बोलता हो और अन्याय (मार्ग पर चलने) से डरता हो ऐसा जातक उत्कृष्ट राज्यभोगों को भोगने वाला तथा विशेष लक्ष्मीवान् होता है॥ १०॥

**करतले यदि यस्य तिलो भवेदविरलो किल तस्य धनागमः।**
**पदतले च तिलेन समन्विते नृपतिर्वाहनचिह्नसमन्वितः॥ ११॥**

यदि यस्य=जातकस्य, करतले=हस्ते, तिलः=तिल इव चिह्नं भवेत्=स्यात्, तर्हि तस्य=जातकस्य ( समीपे ), किल=निश्चतरूपेण, अविरलः=अत्यधिकः, धनागमः=धनस्य आगमो भवति। पदतले=चरणस्य अधोभागे, तिलेन=तिलचिह्नेन, समन्विते=युक्ते सति तथा तत्रैव वाहनचिह्नसमन्विताः=गजाश्वरथादीनां चिह्नैः युक्तः, नृपतिः=राजा भवति॥ ११॥

जिस जातक की हथेली में तिल का चिह्न हो तो उसके पास अत्यधिक लक्ष्मी का आगमन होता है। तथा जिसके पैर के तलवे में गज ( हाथी ) अश्व ( घोड़ा ) रथ आदि के चिह्न हों तो वह राजा होता है॥ ११॥

**एतत् फलं राजकुलोद्भवानां स्यान्मानवानां मुनयो वदन्ति।**
**प्रकल्पयेदन्यकुलोद्भवानां नूनं तदूनं स्वकुलानुमानात्॥ १२॥**

एतत् फलम्=उपर्युक्तं राजयोगकारकफलम्, राजकुलोद्भवानां मानवानां=राजवंशेषु उत्पन्नानां नराणां कृते, मुनयः=सूक्ष्मदृष्टिसम्पन्नाः चिह्नविशेषज्ञाः, वदन्ति=कथयन्ति। ( गणितज्ञः ) अन्यकुलोद्भवानां=राजवंशातिरिक्तवंशोद्भवानां जातकानां हस्ते पादतले उक्तचिह्नानि दृष्ट्वा जातकस्य कुलादिकं ज्ञात्वा न्यूनाधिकं फलं वदेत्॥ १२॥

ये उपर्युक्त राजयोगकारक चिह्न राजाओं के वंशों में उत्पन्न जातकों के लिए ही विशेषतः पूर्ण फलप्रदान करने वाले होते हैं-ऐसा मुनियों ने कहा है। गणितज्ञों

राजकुलों से भिन्न कुलों में उत्पन्न जातकों की वंशपरम्परा को सम्यक्तया ज्ञात करके ही ( इन चिह्नों के सहारे से ) न्यून या अधिक फल कहना चाहिए ॥ १२ ॥

**चिह्नानि यानि प्रतिपादितानि व्यक्तानि सम्पूर्णफलप्रदानि ।**
**वामेतरेऽङ्घ्रौ च करे नराणां धन्यानि वामे खलु कामिनीनाम् ॥ १३ ॥**

यानि=पूर्वोक्तानि चिह्नानि=राजयोगसूचकानि, ( मुनिभिः ) प्रतिपादितानि=कथितानि, व्यक्तानि=स्पष्टीकृतानि सन्ति, तानि चिह्नानि यदि नराणाम्=पुंवाच्यजातकानां दक्षिणे, अंघ्रौ=चरणे, करे=हस्ते वा स्युः, तर्हि ( तानि ) विशिष्टफलकारकाणि भवन्ति । कामिनीनाम्=नारीणाम्, (तु) वामे पादे हस्ते च तानि चिह्नानि निश्चितरूपेण शुभसूचकानि भवन्ति ॥ १३ ॥

यदि पूर्वोक्त राजयोगकारक चिह्न पुरुषों के दाहिने हाथ एवं दाहिने पैर में हों तो वे चिह्न धन्य और पूर्ण फल प्रदान करने वाले होते हैं । यदि यही चिह्न स्त्रियों के वाम हाथ और पैर में हों तो वे विशेष फलदायक होते हैं ॥ १३ ॥

**पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् ।**
**सप्तरक्तं त्रिगम्भीरं त्रिविस्तीर्णं प्रशस्यते[1] ॥ १४ ॥**

अथान्यद्विशेषमाह—यस्य पुरुषस्य शरीरे पञ्चदीर्घम्=पञ्च अङ्गानि दीर्घाणि स्युः, चतुर्ह्रस्वम्=चत्वारि अङ्गानि ह्रस्वानि, पञ्च अङ्गानि सूक्ष्माणि, षडङ्गानि उन्नतानि, सप्ताङ्गानि रक्तानि, त्रिगम्भीरम्=त्रीणि अङ्गानि गम्भीराणि, त्रिविस्तीर्णम्=त्रीणि अङ्गानि विस्तीर्णानि स्युः स पुरुषोऽतीव श्रेष्ठो भवति ॥ १४ ॥

जिस पुरुष के शरीर में पांच अंग लम्बे हों, चार अंग छोटे हों, पांच अंग सूक्ष्म हों, छः अंग उन्नत हों, सात अंग रक्तवर्ण के हों, तीन अंग गम्भीर हों, और तीन अंग विस्तारवाले हों तो ऐसा पुरुष श्रेष्ठ भाग्य से सम्पन्न होता है ॥ १४ ॥

'पञ्चदीर्घं' इति श्लोकमेव चतुर्भिर्विस्तरेण विवृणोति—

**हनुलोचनबाहुनासिकास्तनयोरन्तरमत्र पञ्चकम् ।**
**इति दीर्घमिदन्तु पञ्चकं न भवत्येव नृणामभूभृताम् ॥ १५ ॥**

अत्र हनुः, नेत्रम्, बाहुः, नासिका, तथा स्तनयोः मध्यभागश्च दीर्घम्=विशालं तु तेषामेव भवति ये राजानः सन्ति; यतो हि इमानि पञ्चाङ्गानि अभूभृतां राजभिन्नानां मनुष्याणां कदापि दीर्घाणि न भवन्ति ॥ १५ ॥

---

१. पंचदीर्घम्=बाहु, नेत्र, ठोड़ी, नासिका, और स्तनों के बीच का भाग दीर्घ हो। चतुर्ह्रस्वम्—गला, पीठ, दोनों पिंडलियां ये चार अंग ह्रस्व हों। पञ्चसूक्ष्मम्—दांत, अंगुलियों के पौर, केश त्वचा एवं हाथों के नख सूक्ष्म हों। षडुन्नतम्—पार्श्वभाग, उदर, वक्षःस्थल, नासिका, कन्धे और ललाट ये छः अंग उन्नत हो। सप्तरक्तम्=हथेली, पैर के तलवे, नख, नेत्रों के कोण, जीभ, ओठ और तालु ये सात अंग लाल हों। त्रिगभीरम्—स्वर, चाल, नाभि-ये तीन अंग गम्भीर हों। त्रिविस्तीर्णम्—भौंह, भुजायें, शिश्न—ये तीन अंग विस्तीर्ण हों।

पूर्व श्लोक (१४) में आये पदों का विस्तार से वर्णन करते हैं—हनु प्रदेश, दोनों नेत्र, बाहु, नासिका और स्तनों का मध्यभाग—ये पाँच अंग राजाओं के ही विशाल होते हैं, अन्य व्यक्तियों के नहीं ॥ १५ ॥

**नाभिः स्वरः सत्त्वमिति प्रशस्यं गम्भीरमेतत् त्रितयं नराणाम् ।**
**उरो ललाटो वदनं नराणां, विस्तीर्णमेतत् त्रितयं प्रशस्तम् ॥ १६ ॥**

अथ च—नाभिः, स्वरः=शब्दः (वाणी इत्यर्थः); सत्त्वम्=ओजः, पराक्रम इत्येतत् त्रितयं गम्भीरं प्रशस्यम्; उरः=हृत्प्रदेशः, ललाटः=मस्तकम्, वदनं=मुखम्—एतत् त्रितयं नराणां=मानवानां विस्तीणं प्रशस्तम्=प्रशंसनीयमिति कथितम् ( शास्त्रकारैरिति शेषः ) ॥ १६ ॥

( और ) मनुष्यों की नाभि, स्वर (आवाज), सत्त्व ( पराक्रम )—ये तीनों गम्भीर हों तथा हृदय ( छाती ), मस्तक और मुख—ये तीनों विस्तीर्ण हों तो वह पुरुष श्रेष्ठ होता है—ऐसा शास्त्रकारों को अभिप्रेत है ॥ १६ ॥

**वक्षोऽथ कुक्षिद्वयनासिकास्यकृकाटकाश्चेति षडुन्नतानि ।**
**ह्रस्वानि चत्वार्यथ लिङ्गपृष्ठे ग्रीवा च जङ्घे च हितप्रदानि ॥ १७ ॥**

वक्षः=वक्षःस्थलम्, कुक्षिद्वयम्=उभावपि कुक्षी, नासिका=नासा, आस्यम्=मुखम्, कृकाटका=घोटा—इमानि षडङ्गानि अत्युन्नतानि शोभनानि भवन्ति । लिंग=शिश्नम्, पृष्ठम्=पृष्ठदेशः, तथा ग्रीवा, जङ्घा इमानि चत्वारि अङ्गानि ह्रस्वान्येव शोभनानि भवन्ति ॥ १७ ॥

छाती, दोनों कुक्षि ( कोंख ), नाक, मुख तथा कृकाटका ( गर्दन के ऊपर वाला भाग )—ये छः अंग उन्नत ( ऊँचे ) हों तो शुभकारक होते हैं । तथा लिंग, पीठ, गर्दन एवं जंघा—ये चारों अंग ह्रस्व ( छोटे ) ही शुभसूचक होते हैं ॥ १७ ॥

**नेत्रान्तपादकरताल्वधरोष्ठजिह्वा,**
**रक्ता नखाश्च खलु सप्त सुखावहानि ।**
**सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशाः,**
**साकं त्वचा कररुहाश्च न दुःखितानाम् ॥ १८ ॥**

यस्य जातकस्य नेत्रान्तः=नेत्रयोः कोणभागः, पादौ=चरणौ, करौ=हस्तौ तालुः, अधरोष्ठः=अधःस्थित ओष्ठः, जिह्वा नखाश्च—इमानि सप्ताङ्गानि रक्तानि स्युः, तानि तस्य जातकस्य कृते सुखावहानि=अतीव सुखदायकानि भविष्यन्ति; शुभसूचकानि अङ्गानि स्युरित्यर्थः । दशनाः=दन्ताः, अङ्गुलिपर्वाणि=अङ्गुलीनां पर्वाणि=ग्रन्थयः, केशाः=शिरोरुहाः, त्वचा=

शरीरस्य त्वक्, तथा कररुहाश्च=नखाश्च--एतानि पञ्च अङ्गानि यस्य सूक्ष्माणि भवन्ति स सुखी भवति। दुःखितानां जातकानां इमानि अङ्गानि सूक्ष्माणि न भवन्ति ॥ १८ ॥

नेत्रों के कोण, पैर, हाथ, तालु, नीचे का ओठ और जिह्वा (जीभ) तथा नख— ये सात अंग लाल होने पर अत्यन्त ही शुभकारी होते हैं। और दाँत, अँगुलियों के पोर, शिर के बाल, त्वचा एवं हाथों के नाखून--ये पांच अंग सुखी व्यक्ति के ही सूक्ष्म होते हैं, दुःखी व्यक्ति के नहीं ॥ १८ ॥

**यवोऽङ्गुष्ठोदरे यस्य यशस्वी च नरो भवेत्।**
**अनामिकामूलजा स्याद् रेखा यस्य स पुण्यवान् ॥ १९ ॥**

यस्य=जातकस्य अंगुष्ठोदरे=अङ्गुष्ठस्य मध्ये यवः=यववद् रेखा भवति (स जातकः) यशस्वी=कीर्तिमान् भवेत्। यस्य=जातकस्य करस्य अनामिकामूलजा=अङ्गुष्ठात् चतुर्थाङ्गुलिमूलस्थानादारभ्य रेखा स्यात्=भवेत सः=जातकः पुण्यवान्=पुण्ययुक्तः पुण्योत्पादकधार्मिककृत्यसम्पादको भवति ॥

जिस जातक के हाथ के अंगूठे में यवरेखा (जौ के आकार की रेखा) हो तो उसे यशस्वी जानना चाहिये। तथा जिसकी अनामिका के मूल से रेखा हो तो वह पुण्यवान् होता है, अर्थात् वह जीवन में पुण्यमय कार्य करता है ॥ १९ ॥

**उरो विशालं धनवान् हनुः शीर्षोऽपराजितः।**
**बहुपुत्रः कटिस्थूलो विशालचरणो धनी ॥ २० ॥**

(यस्य जातकस्य) उरः=वक्षःस्थलम् विशालम्=विस्तृतम्, (सः) धनवान्=विशेषधनयुक्तो भवति। हनुः=हनुप्रदेशः (अधरोष्ठस्य अधोभागः तथा) शीर्षः=शिरः विस्तृतो भवेत् (स सर्वत्रैव) अपराजितः=पराजितो न भवति, अर्थात् सर्वत्र जयी भवति। चेत् कटिप्रदेशः, स्थूलः, (तर्हि) बहुपुत्रः=अधिकपुत्रवान् भवति। विशालचरणः=विस्तृतपादयुक्तो जातकः धनी=धनवान् भवति ॥२०॥

जिस जातक की छाती विशाल होती है वह धनी होता है। जिसकी ठोढ़ी (हनु) तथा शिर बड़ा होता है वह सभी जगह विजयी होता है। जिसकी कमर मोटी हो तो वह बहुत पुत्रों वाला होता है। जिसके पैर बड़े हों वह विशेष धनी होता है ॥ २० ॥

**चक्षुःस्नेहे च सौभाग्यं दन्तस्नेहे च भोजनम्।**
**वपुःस्नेहे च सौख्यं स्यात् पादस्नेहे च वाहनम् ॥ २१ ॥**

यस्य जातकस्य चक्षुषोः=नेत्रयोः, स्नेहः=स्निग्धता भवति स सौभाग्यशाली। दन्तेषु स्निग्धेषु सत्सु, स भोजनस्य लाभी भवति। वपुषः=शरीरस्य

स्नेहेन=स्निग्धतया ( तस्य ) सौख्यं=सुखस्यानुभूतिः स्यात्=भवेत् । पाद-स्नेहे=उभयोः पादयोः स्निग्धे सति ( तत्कृते ) वाहनम्=वाहनस्य प्राप्ति-र्भवति ।। २१ ।।

जिस मनुष्य के नेत्र स्निग्ध (चिकने) हों तो वह सौभाग्यशाली होता है, दांत स्निग्ध हों तो उसे उत्तम भोजन मिलता है । जिसका शरीर स्निग्ध हो तो उसे सुख मिलता है और पैर स्निग्ध हों तो उसे वाहन प्राप्त होता है ।। २१ ।।

### अशुभचिह्नानि

**उलूकाक्षाश्च काकाक्षा मण्डूकाक्षाश्च ये नराः ।**
**अल्परोमकपोलाश्च ते सर्वे पापबुद्धयः ।। २२ ।।**

येषां नराणां ( जातकानां ) उलूकस्य इव अक्षा।=नेत्राणि, काकस्य इव अक्षाणि=नेत्राणि, मण्डूकस्य इव अक्षाणि=नेत्राणि भवन्ति तथा अल्परोम-कपोलाश्च=येषां कपोलेषु अल्परोमाणि भवन्ति एतादृशास्ते सर्वे मानवाः पापबुद्धयः=पापकर्मणि लिप्सा बुद्धिः येषामेवम्भूता भवन्ति ।। २२ ।।

( अशुभ चिह्नों का वर्णन- ) जिसके नेत्र उल्लू, कौए अथवा मण्डूक ( मेढ़क ) के नेत्रों के समान हों, और जिसके कपोलों में थोड़े रोम हों ऐसे सभी जीव पापकर्म में संलग्न रहेने वाले होते हैं ।। २२ ।।

**विस्वराः काकनादाश्च कैकरा बभ्रुनासिकाः ।**
**शिराला रोमणा ह्रस्वोत्तरोष्ठास्ते च पापिनः ।। २३ ।।**

( ये पुरुषाः ) विस्वराः=कर्कशवाचः, काकनादाः=काकशब्दस्वराः, कैकराः=कैकरा इव दृष्टिः येषां ते, बभ्रुनासिकाः=नकुलस्येव नासिका येषां ते, शिरालाः=बहुनाडिका, रोमणाः=बहुरोमयुक्ताः, ह्रस्वोत्तरोष्ठाः=उत्तरोष्ठः ह्रस्वो येषां ते एवम्भूताः जातकाः, पापिनः=पापकर्मणि लिप्ताः भवन्ति ।। २३ ।।

कर्कश स्वर, कौए के समान कठोर वाणी वाले, केकड़ा के समान दृष्टिवाले, नेवला के समान नासिका वाले, बहुत नाड़ी एवं रोम वाले और स्वल्प (छोटे) ओठ वाले सभी जातक पापकर्म में लिप्त रहने वाले होते हैं ।। २३ ।।

### कयोर्विवाहः सुखदः ?

**पितृशीलोत्तमा कन्या मातृशीलो नरस्तथा ।**
**समपुष्टस्तुल्यरूपो विवाहः सुखदो भवेत् ।। २४ ।।**

पितृशीला=पितृवत् आचरणयुक्ता, कन्या=पुत्री, उत्तमा=प्रशस्ता, मातृ-शीलः=मातृवत् आचरणयुक्तो नरः=पुरुषः ( उत्तमः ) भवति । तथा ययोः स्त्रीपुरुषयोः समानरूपेण शरीरस्य पुष्टता, सौन्दर्यं च भवतः तयो विवाहः=परिणयः, सुखदः=सुखप्रदो भवेत् ।। २४ ।।

पिता के समान शीलवाली कन्या उत्तम होती है। एवं माता के समान शील-वाला पुत्र उत्तम होता है। जिस पुरुष और स्त्री से अंग समानतया पुष्ट हों, समान रूप में हों तो उनका विवाह सुखप्रद होता है ॥ २४ ॥

**ययोरेव समं वित्तं ययोरेव समं कुलम् ।**
**तयोर्विवाहः सख्यं च न तु पुष्ट-विपुष्टयोः ॥ २४क ॥**

ययोः=स्त्रीपुरुषयोः समं=समानम्, वित्तम्=धनम्, ययोः समानं कुलम्, तयोरेव=विवाहः शोभनम्, तयोरेव सख्यम्=मित्रता, शोभना शुभदा भवति। न तु पुष्ट-विपुष्टयोः=वित्तेषु कुलेषु वा असमानयोः ( विवाहः, सख्यं च ) शोभनं न भवति ॥ २४क ॥

जिनको विवाह करना हो उन दोनों के पास समान धन हो, तथा समान कुल हो, तभी उनका विवाह शुभकारी होता है। उसी प्रकार मित्रता भी समान धन एवं समान कुल वाले के साथ ही कल्याणकारी होती है। कुल तथा वित्त में असमानों का विवाह और मित्रता कल्याणकारिणी नहीं होती ॥ २४क ॥

**शंख-पद्म-यव-छत्र-माला-मत्स्य-ध्वजादयः ।**
**पादे पाणौ भवन्त्येव राज्ञां तद्योषितां तथा ॥ २५ ॥**

शङ्ख=शङ्खस्य इव आकृतिः, पद्मम्=कमलम्, यवः, छत्रम्, माला, मत्स्यः ध्वजादयश्च—इत्यादीनां आकृतिः यस्य पुरुषस्य अथवा नारीणां हस्ते पादे वा भवन्ति ते पुरुषा राजानो भवन्ति, ताः=नार्यश्च महिष्यो भवन्ति। यतो हि साधारणस्त्रीपुरुषाणां हस्तयोः पादयोः वा इमानि चिह्नानि न लक्षितानि भवन्ति ॥ २५ ॥

जिनके भाग्य में राजयोग होता है, उन्हीं पुरुषों अथवा स्त्रियों के हाथ या पैरों में शंख, कमल,यव ( औ ), सत्र- माला, मछली, ध्वजा आदि चिह्न होते हैं। साधारण नर-नारी के हाथ-पैरों में ये चिह्न नहीं मिलते ॥ २५ ॥

व्यासोक्त्या नारीणां विशेषलक्षणानि

**मार्जार-पिङ्गला-नारी विषकन्येति कीर्तिता ।**
**सुवर्णपिङ्गला नारी नातिदुष्टा परे जगुः ॥ २६ ॥**

व्यासः सम्प्रति नारीणां विशिष्टलक्षणानि ब्रवीति—मार्जारपिंगला नारी=मार्जारवत् पिंगलवर्णा नारी 'विषकन्या' इति कीर्तिता=विषकन्या कथिता। सुवर्णपिङ्गला नारी=सुवर्णवत् पिंगलवर्णा नारी=स्त्री अतिदुष्टा=अत्यन्त-दुष्टा=दुष्टस्वभावा न भवति—इति अपरे आचार्याः कथयन्ति ॥ २६ ॥

अब व्यास जी नारियों के विशेष लक्षण कहते हैं—बिल्ली के समान पिंगल

वर्ण वाली स्त्री 'विषकन्या' कही जाती है। परन्तु दूसरे आचार्यों का मत है कि सुवर्णवत् पिंगल वर्ण वाली नारी अत्यन्त दुष्टा नहीं होती ॥ २६ ॥

**कृष्णजिह्वा च लम्बोष्ठी पिङ्गाक्षी घर्घरस्वरा।**
**त्याज्या यस्याश्च पादौ च कुचावोष्ठौ च रोमशौ ॥ २७ ॥**

कृष्णजिह्वा=यस्या जिह्वा कृष्णा भवेत्, यस्या ओष्ठौ लम्बायमानौ स्याताम्, सा च पिंगाक्षी=यस्या नेत्रे पीतवर्णे, यस्या वाणी घर्घरस्वरयुक्ता, यस्याः कुचौ=स्तनौ ओष्ठे पादौ च रोमशौ रोमयुक्तौ, एतादृशी नारी त्याज्या=अग्राह्या, तया सह विवाहो न करणीय इत्यर्थः ॥ २७ ॥

जो स्त्री काली जिह्वा वाली हो, जिसके ओष्ठ लम्बे हों, नेत्र पीले हों और बोलने में जिसका शब्द घर्घर हो, तथा जिसके पैरों, स्तनों और ओठों में रोम हों ऐसी स्त्री के साथ विवाहादि न करें। ऐसी स्त्रियाँ अन्य सम्बन्धों में भी त्याज्य होती हैं ॥ २७ ॥

**विरलाङ्गुलिदन्ता च कुचगण्डबृहत्कचा।**
**कृष्णतालुः परित्याज्या व्यङ्गाङ्गी पितृमातृतः ॥ २८ ॥**

यस्या नार्याः, विरलाङ्गुलयः=विरलाः=असम्पृक्ता अंगुलयः, तथैव विरलाः दन्ताः ( स्युः ), कुचगण्डबृहत्कचा=कुचयोः, गण्डेषु=कपोलेषु उपरि बृहत् कचाः स्युः, यस्याः तालुः कृष्णवर्णो भवेत्, याः पितृमातृतः व्यङ्गाङ्गी=अधिकाङ्गयुक्ता अथवा न्यूनाङ्गा भवेत्। एतादृशी स्त्री परित्याज्या=न ग्रहणयोग्या--इति शास्त्रकाराणां मतम् ॥ २८ ॥

जिन स्त्रियों की अंगुलियाँ और दाँत विरल ( दूर-दूर ) हों; स्तनों और कपोलों के ऊपर बड़े-बड़े बाल और तालु काला हो, जो माता-पिता से अधिक या न्यून अङ्ग वाली हो, ऐसी स्त्रियों से विवाहादि नहीं करना चाहिए ॥ २८ ॥

**कनिष्ठानामिका यस्या यदि मध्यमिका तथा।**
**भूमिं न स्पृशति सा स्त्री विज्ञेया व्यभिचारिणी ॥ २९ ॥**

यस्याः=नार्याः, कनिष्ठका=अनामिकायाः प्रान्तवर्तिनी, अनामिका=मध्यमाकनिष्ठकयोर्मध्यस्था तथा मध्यमिका=मध्यमा अंगुलिः भूमिं=पृथ्वीं न स्पृशति=स्पर्शं न कुर्यात् सा=एतादृशी स्त्री=नारी, व्यभिचारिणी=परपुरुषगामिनी, विज्ञेया=ज्ञातव्या ॥ २९ ॥

जिस स्त्री के पैर की कनिष्ठा, अनामिका और मध्यमा अंगुली पृथ्वी का स्पर्श नहीं करती, उस स्त्री को व्यभिचारिणी समझना चाहिए ॥ २९ ॥

**पादे प्रदेशिनी यस्या अंगुष्ठं समतिक्रमेत् ।**
**न सा भर्तृगृहे तिष्ठेत् स्वच्छन्दा कामचारिणी ॥ ३० ॥**

यस्याः पादे=चरणे, प्रदेशिनी=अंगुष्ठस्य पार्श्वस्थिता अंगुलिः अंगुष्ठं समतिक्रमेत्=अङ्गुष्ठात् दीर्घा भवेत् । सा=नारी, भर्तृगृहे=पतिगृहे न तिष्ठेत्=न स्थिरा भवति । अपितु एतादृशी नारी स्वच्छन्दा=स्वेच्छया, कामचारिणी=कामुकी भूत्वा परपुरुषानुरागिणी भवति ॥ ३० ॥

जिस स्त्री के पैर के अंगूठे के पास की अंगुली अंगूठे से लम्बी हो ऐसी स्त्री अपने पति के घर में शीलसम्पन्न बन कर नहीं रहती, अपितु वह स्वेच्छाचारिणी और पुंश्चली होती है ॥ ३० ॥

**उदरे श्वशुरं हन्ति ललाटे हन्ति देवरम् ।**
**स्फिचौ पतिं लम्बमाने धनं कूर्मोदरी हरेत् ॥ ३१ ॥**

यस्या नार्यः उदरं लम्बायमानमस्ति सा श्वसुरं हन्ति, ललाटे लम्बमाने सति सा देवरं हन्ति, स्फिचौ=कटेरधोभागस्थितमांसपिंडयुगलं कथ्येते, तयोः लम्बमानयोः नारी पतिं हन्ति । कूर्मोदरी नारी धनं हरेत्=धनधान्यं विनाशयति ॥ ३१ ॥

जिस स्त्री का पेट लम्बा हो वह अपने श्वसुर को मार देती है । जिसका माथा लम्बा हो अपने देवर को मारती है, स्फिक्=(कटि और पट्टे के बीच का मांसपिंड) यदि लम्बा हो तो अपने पति को मारती है, और कछुए के समान उदर वाली स्त्री धन को नष्ट करती है । ( 'मारती है' से तात्पर्य है—ऐसी स्त्री से विवाह करने वाले शीघ्र मर जाते हैं ) ॥ ३१ ॥

**पृष्ठावर्ता पतिं हन्ति नाभ्यावर्ता पतिव्रता ।**
**कट्यावर्ता तु स्वच्छन्दा स्कन्धावर्तार्थभागिनी ॥ ३२ ॥**

यस्याः पृष्ठे चक्रवत् रोमावली भवति सा पतिं हन्ति, यस्याः नाभौ चक्रवत् आवर्तः भवति सा पतिव्रता भवति । यस्याः कट्यां चक्रवत् आवर्तो भवति सा स्वच्छन्दा भवति । यस्याः स्कन्धयोः चक्रवत् चिह्नं भवेत् सा धनवती भवति ॥ ३२ ॥

जिस नारी के पीठ पर चक्र की समान गोल रोमाबली का चिह्न होता है वह पति को मारती है । ( अर्थात् वह विधवा हो जाती है ) । नाभि में चक्र के समान आवर्त वाली स्त्री पतिब्रता होती है । कमर में आवर्त ( चक्र ) के समान चिह्नवाली स्त्री स्वच्छन्द होती है । कन्धों पर चक्र के समान चिह्न वाली स्त्री बहुत धनवती होती है ॥ ३२ ॥

## प्रशस्तकन्यालक्षणानि

**सुस्वरा च सुवेशा च मृद्वङ्गी चारुभाषिणी।**
**प्रशस्ता सुगतिः कन्या या च दृङ्मनसोः प्रिया॥ ३३॥**

या स्त्री सुस्वरा=मधुरस्वरा, सुवेशा=सुष्ठुवेशा, मृद्वङ्गी=कोमलाङ्गी, चारुरभाषिणी=मनोहरभाषिणी, सुगतिः=सुष्ठु=शोभना गतिः यस्याः सा हंसगामिनी च, या च=दृङ्मनसोः प्रिया=नेत्रानन्दकरी तथा यदवलोकनेन मनः प्रसन्नं भवेत् एतादृशी कन्या प्रशस्ता=श्रेष्ठा कथिता शास्त्रज्ञैः॥ ३३॥

जिस स्त्री का स्वर सुन्दर हो, सुन्दर वेशभूषा वाली हो, जिसके अग-प्रत्यंग कोमल हों और मधुर बोलने वाली हो, और जो हंस तथा हाथी के समान श्रेष्ठ चाल वाली हो, एवं जिसके अवलोकन से नेत्र और मन प्रसन्न हों--ऐसी कन्या प्रशस्त कही गयी है॥ ३३॥

**मण्डूककुक्षिका नारी न्यग्रोधपरिमण्डला।**
**एवं जनयते पुत्रं स तु राजा भविष्यति॥ ३४॥**

मण्डूककुक्षिका=मण्डूकस्य कुक्षी=यस्या उदरस्य उभावपि पार्श्वौ सा नारी=स्त्री, न्यग्रोधपरिमण्डला=न्यग्रोधवृक्ष इव परिमण्डला=वृहद्विस्तारयुक्ता, एवं=एतादृशी स्त्री यं पुत्रं=सुतं, जनयते=उत्पादयति सः=पुत्रो राजा भविष्यति॥ ३४॥

मण्डूक=( मेढक ) के समान कुक्षि=( कोंख ) वाली और न्यग्रोध=( बहेड़ा ) के समान ऊपर के वृहत् ( विस्तृत ) अंगों वाली स्त्री जिस पुत्र को पैदा करेगी वह राजा होगा। ( वह पुत्र समस्त ऐश्वर्यों से सुशोभित होता है )॥ ३४॥

**मध्याङ्गुलीया मणिबन्धनोत्था रेखा गता पाणितलेऽङ्गनानाम्।**
**ऊर्ध्वं गता पाणितलेऽथवा या पुंसोऽथवा राजसुखाय सा स्यात्॥ ३५॥**

वराहाचार्यः कथयति -अङ्गनानाम्=नारीणाम्=मध्याङ्गुलीया=मध्यमाङ्गुलीत आरभ्य, मणिबन्धनोत्था=मणिबन्धपर्यन्ता=रेखा यस्याः पाणितले गता, पाणितले ऊर्ध्वगतां रेखां विद्वांसः शुभां कथयन्ति। अथवा उक्तप्रकारेण रेखा पुंसः=नरस्य पाणितले भवति चेत् सा=एतादृशी रेखा राजसुखाय=राजोचितसुखसाधनानां परिचायिका भवति॥ ३५॥

आचार्य वराह का कथन है कि जिस नारी या पुरुष के हाथ में मध्यमा अंगुली से लेकर मणिबन्ध पर्यन्त ऊर्ध्वरेखा होती है वह दोनों ( स्त्री-पुरुष ) के लिए राजसुखों को देने वाली होती है॥ ३५॥

**कनिष्ठिकामूलभवा गता या प्रदेशिनी मध्यमकान्तराला।**
**करोति रेखा परमायुषः सा प्रमाणहीनाऽथ तदूनमायुः॥ ३६॥**

( येषां जीवानां ) कनिष्ठिकामूलभवा=कनिष्ठिका अंगुल्या मूलदेशे भवा=उत्पन्ना या रेखा सा ( यदि ) प्रदेशिनीमध्यमान्तराला गता=सा रेखा यदि प्रदेशिनामध्यमा अङ्गुल्योः अन्तरालपर्यन्तम्=मध्यपर्यन्तम् गता=गच्छति, तर्हि ( एतादृशी ) रेखा परमायुषम्=उत्कृष्टम् आयुः ( दीर्घजीविनं ) करोति। सा रेखा प्रमाणहोना=पूर्वोक्त-प्रकारेण ( कनिष्ठकादारभ्य मध्यमाप्रदेशिनी पर्यन्तं ) न गच्छति तर्हि सा रेखा ऊनं=न्यूनं आयुः दिशति ॥ ३६ ॥

जिनके हाथ में कनिष्ठिका से लेकर मध्यमा और प्रदेशिनी के बीच तक रेखा जाती है वे पूर्ण आयु वाले होते हैं। यदि वही रेखा पूर्ण न हो तो उतनी ही आयु भी न्यून समझनी चाहिए ॥ ३६ ॥

## सन्तानरेखा

**अंगुष्ठमूले प्रसवस्य रेखाः पुत्रा वृहत्यः प्रमदाश्च तन्व्यः।**
**अच्छिन्नदीर्घाश्च चिरायुषस्ताः स्वल्पायुषश्छिन्नलघुप्रमाणाः ॥३७॥**

अङ्गुष्ठस्य मूले=उद्भववस्थाने प्रसवस्य रेखाः (भवन्ति)। तत्र यदि वृहत्यः=विस्तृताः रेखाः सन्ति, तर्हि ताः पुत्रसन्ततिसूचकाः। तन्व्यः=सूक्ष्मा रेखाश्च प्रमदाः=बालिकाः प्रददति। ताः अच्छिन्ना दीर्घाश्च रेखाः चिरायुषः दीर्घजीविनः पुरुषस्य भवन्ति। छिन्नलघुप्रमाणाः=छिन्ना तथा ह्रस्वाकारा रेखा अल्पायुषः=अल्पजीविनः पुरुषस्य भवन्ति ॥ ३७ ॥

अंगूठे के मूल भाग में सन्तान-रेखायें होती हैं। यदि वे बड़ी रेखाएं हैं, तो पुत्रों की सूचक होती हैं। और यदि वे ही रेखा सूक्ष्म और छोटी हों तो कन्या-सूचक होती हैं। वे कटी-पिटी न हों और लम्बी हों तो वह पुरुष दीर्घजीवी होता है, यदि वे ही रेखायें किसी के कटी तथा छोटी हों तो वह अल्पायु होता है ॥ ३७ ॥

## मैत्रीसूचकरेखाविचारपद्धतिः

**कलत्रकान्तयोः सख्यं जीविताख्यकनिष्ठयोः।**
**मध्ये विचिन्तयेद् दक्षे वामहस्ते नरस्त्रियोः ॥ ३८ ॥**

जीविताख्यकनिष्ठयोः=जीवनरेखायाः कनिष्ठिकायाश्च मध्ये कलत्रकान्तयोः=पतिपत्न्योः सख्यं=मैत्रीभावं सूचयन्ती एतादृशी रेखा पुरुषस्य दक्षिणहस्ते नारीणां च वामहस्ते विचिन्तयेत्=सुधीभिः चिन्तनीया ॥ ३८ ॥

स्त्री पुरुष ( पति-पत्नी ) में आपस में मित्रता, सौहार्द की रेखा कनिष्ठा अंगुली के मध्य में पुरुष के दाहिने तथा स्त्री के वाम हस्त में विद्वान् को खोजनी चाहिए ॥ ३८ ॥

### निर्धनानां हस्तरेखा

**अरेखं बहुरेखं वा येषां पाणितलं नृणाम् ।**
**ते स्युरल्पायुषो निःस्वा दुःखिता नात्र संशयः ॥ ३९ ॥**

येषां हस्ते अरेखा=अल्परेखाः सन्ति, अथवा येषां हस्ते बह्व्यः रेखाः सन्ति, ते सर्वे अल्पायुषो निर्धना दुःखभागिनश्च भवन्ति, अस्मिन् विषये संशयो नास्ति ॥ ३९ ॥

जिनके हाथ में बहुत कम रेखाएं हों, अथवा बहुत अधिक रेखाएं हों, इस प्रकार के मनुष्य अल्पायु निर्धन एवं दुःखी होते हैं, इसमें कोई संशय नहीं करना चाहिए ॥ ३६ ॥

**क्लेशसम्पल्लवा रेखा कुर्याच्छिन्नायुषः क्षयम् ।**
**मणिबन्धोन्मुखा वृद्धयै विपदोऽगुष्ठसम्मुखा ॥ ४० ॥**

( यस्य हस्ते ) पल्लवम् (पत्रमिव) रेखा भवति, सा क्लेशं कष्टं ददाति । यदि सा रेखा छिन्ना भवेत् तर्हि तत्प्रभावेण आयुषः क्षयं भवति । यदि मणिबन्धस्य सन्मुखा रेखा भवति तर्हि तस्य वृद्धिः धन-धान्यवृद्धिः भवति । अंगुष्ठसम्मुखा=अंगुष्ठस्य सम्मुखे सा रेखा चेत् तर्हि तस्य कृते विपद आयान्ति ॥ ४० ॥

हाथ में पत्ते (पल्लव ) के समान रेखा क्लेशकारक होती है । यदि रेखा कटी हो तो आयु को क्षीण करती है । यदि मणिबन्ध के सम्मुख हो तो वृद्धिकारक (उन्नतिकारक) होती है । अगूठे के सम्मुख हो तो विपत्तिकारक होती है ॥ ४० ॥

### शुभा रेखा

**मत्स्यः करतले यस्य स नरो बहुकोशवान् ।**
**भाग्यरेखा सुतीक्ष्णाग्रा शुभा छत्राकृतिस्तथा ॥ ४१ ॥**

यस्य=पुरुषस्य ( जातकस्य ) करतले=हस्ते, मत्स्यः=मीनरेखा भवति, स नरः बहुकोशवान्=बहुधनवान् जायते । यस्य करतले छत्रमिव चिह्नं भवेत्, अथवा सुतीक्ष्णाग्रा=तीक्ष्णोऽग्रभागो यस्याः सा भाग्यरेखा शुभा कल्याणसूचिका भवति ॥ ४१ ॥

जिसकी हथेली में मछली की तरह रेखा होती है वह नर बहुत धनवान् होता है और जिसकी हथेली में रेखा तीक्ष्ण (पतले) अग्रभाग वाली (छत्र) रेखा हो वह भाग्यरेखा और बहुत ही शुभप्रदा होती है ॥ ४१ ॥

### हस्तरचनां दृष्ट्वा फलादेशविधिः—

**श्लिष्टान्यंगुलिमध्यानि द्रव्यसञ्चयहेतवे ।**
**तानि चेच्छिद्रयुक्तानि त्यागशीलकराणि च ॥ ४२ ॥**

यस्य हस्तस्य अंगुलीनां मध्यभागः श्लिष्टः=मिलितो भवति स पुरुषः द्रव्यसञ्चयकर्ता भवति। यस्य हस्तस्य अंगुलीनां मध्यभागे छिद्राणि भवन्ति स पुरुषः त्यागशीलः=व्ययशीलो ( दरिद्रो ) भवति ॥ ४२ ॥

जिसके हाथ की अंगुलियों के मध्य भाग आपस में मिले हुये हो वह धन-सञ्चय करता है। और जिसकी अंगुलियों के बीच में छिद्र होते हैं वह त्यागशील होता है अर्थात् वह धन-संचय नहीं कर पाता। उसे जो भी धन प्राप्त होता है वह उसे खर्च कर देता है ॥ ४२ ॥

अग्राह्यनारीणां लक्षणानि

**मिलद्भ्रूयुग्मिका काणा लम्बोष्ठी शूर्पकर्णिका।**
**वक्रास्यनासिका चातिमौना त्याज्याऽतिभाषिणी ॥ ४३ ॥**

मिलद्भ्रूयुग्मिका=यस्या उभावपि भ्रुवौ मिलितौ सा, काणा=एकाक्षी, लम्बोष्ठी=लम्बायमानौष्ठयुक्ता, शूर्पकर्णिका=शूर्पः=हिन्दीभाषायां 'सूप' इति प्रसिद्धः ( धान्यशुद्धिकरणस्य पात्रविशेषः ), तस्येव कर्णौ यस्याः सा, वक्रास्या=कुटिलमुखी ( वक्रं=कुटिलमास्यं=मुखं यस्या सा ), वक्रनासिका कुटिलनासायुक्ता, अतिमौना=सर्वदा मौनं धारयति सा; अथवा अतिभाषिणी =सर्वदा विशेषरूपेणात्यन्तं वदति सा उक्तलक्षणलक्षिता नारी, विज्ञैः परित्याज्या=न ग्राह्या ॥ ४३ ॥

( त्याज्य स्त्रियों के लक्षण- ) जिसकी भौंवें मिली हुई हों, जो एक आँखवाली हो, लम्बे ओठों वाली हो, सूप ( धान्य साफ करने के पात्र ) के समान कानवाली, टेढ़े मुख वाली, टेढ़ी नाक वाली, सर्वदा मौन रहने वाली, या अधिक बोलने वाली हो ऐसे लक्षणों वाली स्त्रियाँ सर्वथा त्याज्य हैं ॥ ४३ ॥

**यस्याः केशांशुकस्पर्शात् म्लायन्ति कुसुमस्रजः।**
**स्नानाम्भसि विपद्यन्ते बहवः क्षुद्रजन्तवः ॥ ४४ ॥**
**धीयन्ते मत्कुणास्तस्यास्तथा यूकाश्च वाससि।**
**चौर्यान्नभक्षिणी शौचहीना त्याज्या नितम्बिनी ॥ ४५ ॥**

यस्या=नार्याः, केशांशुकस्पर्शात्=केशानां=शिरोरुहाणां अंशुकस्य= वस्त्रस्य स्पर्शात्=संस्पर्शात्, कुसुमस्रजः=पुष्पाणां माला, म्लायन्ति=शुष्कतां गच्छन्ति। यस्याः स्नानाम्भसि=स्नानजले, बहवः क्षुद्रजन्तवः=ह्रस्वकायजीवाः, विपद्यन्ते=उत्पद्यन्ते ॥ ४४ ॥

तथा यस्याः ( शिरोदेशे ) मत्कुणाः=लिक्षाः(जूँ हिन्दी भाषायाम्) भवन्ति, वाससि=वस्त्रे=यूकाः ( चीलर इति हिन्दीभाषायाम् ) भवन्ति।

अथवा या स्त्री गृहेऽपि चौर्येण अन्नं भुंक्ते, या शौचहीना=पवित्रतारहिता, नितम्बिनी=पृथुनितम्बशालिनी वा, सा त्याज्या=अग्राह्या भवति ॥ ४५ ॥

जिस स्त्री के केश और वस्त्रों के स्पर्श से पुष्पों की माला मलिन हो जाय तथा जिसके स्नान वाले जल में बहुत से छोटे कीटाणु उत्पन्न होवें ॥ ४४ ॥

तथा जिसके शरीर में जुयें हों, जिसके वस्त्रों में यूका ( लीखें ) हों और जो चुराकर अन्न खाने वाली एवं पवित्रता से रहित हो और जो अधिक मोटे नितम्ब वाली हो, ऐसी स्त्री सर्वथा त्याग करने योग्य कही गयी है । ( अर्थात् ऐसी स्त्रियों से सम्बन्ध नहीं रखना चाहिये ) ॥ ४५ ॥

## पुरुषलक्षणम्

तत्र पुरुषस्योर्ध्वमंगुलमानमाह कात्यायनः—

**अष्टशतं षण्णवतिः परिमाणं चतुरशीतिरिति पुंसाम् ।**
**उत्तम-सम-हीनानामङ्गुलसंख्या स्वमानेन ॥ ४६ ॥**

स्त्रीणां लक्षणानि उक्त्वा सम्प्रति पुरुषलक्षणं कथ्यते । तत्र ऊर्ध्वम् अंगुलमानमाह कात्यायनः=कात्यायननामको रेखाविद् विद्वान् कथयति—स्वकीयहस्तस्य अंगुलप्रमाणेन अष्टशतम्=अष्टोत्तरशतांगुलप्रमाणेन दीर्घः=उच्चः ( उन्नतः ) पुरुषोऽतीव उत्तमो भवति । षण्णवतिमितांगुलमानेन दीर्घः मध्यमः पुरुषो भवति । तथा चतुरशीतिपरिमितांगुलमानेन दीर्घः हीनः पुरुषो भवति[1] ॥ ४६ ॥

कात्यायन ऋषि का कथन है कि अपने हाथ की अंगुलियों के प्रमाण से एक सौ आठ ( १०८ ) अंगुल ऊंचा पुरुष उत्तम होता है । छियानवे ( ९६ ) अंगुल ऊंचा पुरुष मध्यम होता है और चौरासी ( ८४ ) अंगुल ऊंचा पुरुष हीन होता है । ( यहाँ उत्तम, मध्यम और हीन शब्दों से समस्त गुणों एवं ऐश्वर्य आदि में उत्तम, मध्यम और हीन से तात्पर्य है ) ॥ ४६ ॥

## स्वरस्य लक्षणानि

**करिवृषरथौघभेरीमृदङ्गसिंहाब्दनिःस्वना भूपाः ।**
**गर्दभजर्जररूक्षस्वराश्च धनसौख्यसन्त्यक्ताः ॥ ४७ ॥**

सम्प्रति स्वरस्य लक्षणानि कथ्यन्ते--करी, हस्ती, वृषः=अनड्वान्, रथौघः=रथानाम् ओघः=समूहः, भेरीमृदङ्गौ=उभावपि वाद्ययन्त्रौ, सिंहः=

---

१. यथाहाचार्यो वराहमिहिरो बृहत्संहितायाम्—

"षण्णवतिरङ्गुलानां व्यायामो दीर्घता च हंसस्य ।
शश-रुचक-भद्र-मालव्यसंज्ञितास्त्र्यङ्गुलवृद्धया ॥ ( ६९.७ )

व्याघ्रः, अब्दः=मेघः एतेषां निःस्वनः=गम्भीरस्वर इव निःस्वनो येषां ते पुरुषाः भूपाः=राजान एव भवन्ति; यतो हि सामान्यपुरुषाणामेतादृग् गंभीरः स्वरो न भवति। गर्दभस्वरवत् यस्य स्वरः, अथवा जर्जरः=क्षीणकायः, रूक्षः=माधुर्यरहितः स्वरो येषां ते, एतादृशः पुरुषा धनसौख्यसन्त्यक्ताः= धन-सौख्यरहिता भवन्ति ॥ ४७ ॥

अब ( पुरुषों के ) स्वर-लक्षण कहते हैं—हाथी, बैल, रथसमूह, मृदङ्ग, सिंह और मेघों के समान गम्भीर स्वर वाले पुरुष राजा होते हैं। और गदहे के समान स्वर वाले, क्षीण स्वर वाले तथा रूक्ष अर्थात् कठोर ( माधुर्यरहित ) स्वर वाले पुरुष धन और सुख से वंचित रहते हैं ॥ ४७ ॥

आकाशादिप्रकृतिगुणाः पञ्चमहापुरुषलक्षणाध्याये निरूपिताः[1]। सुस्पष्टम्, अतो न व्याख्यास्यामः ॥

पञ्च महापुरुषों के लक्षण जिस अध्याय में कहे गये हैं उसी अध्याय में आकाशादि प्रकृति के समस्त गुणों का वर्णन किया जा चुका है ॥

अथ मनुष्याणां प्रत्येकाङ्गलक्षणानि। तत्रादौ पादयोर्लक्षणमाह—

**अस्वेदनौ मृदुतलौ कमलोदराभौ**
**श्लिष्टांगुली रुचिरताम्रनखौ सुपार्ष्णी।**
**उष्णौ शिराविरहितौ च निगूढगुल्फौ**
**कूर्मोन्नतौ च चरणौ मनुजेश्वरस्य ॥ ४८ ॥**

अथ=स्वरादीनां लक्षणकथनानन्तरम्, मनुष्याणाम्=मानवानां प्रत्येकाङ्गलक्षणानि=समस्तानामङ्गानां लक्षणानि=शुभाशुभसूचकचिह्नानि। तत्रादौ प्रारम्भकाल एव पादयोर्लक्षणमाह=उक्तवान्। तानि यथा—

अस्वेदनौ=स्वेदरहितौ, मृदुतलौ=कोमलचरणौ, कमलोदराभौ=कमलस्य मध्यभागस्य आभा इव आभायुक्तौ, श्लिष्टाङ्गुली=परस्परसम्मिलिताङ्गुलयः, रुचिरताम्रनखैः=सुन्दररक्तवर्णनखयुक्तैः, सुपार्ष्णी=पादयोः शोभनपृष्ठभागौ, उष्णौ=शीतलतारहितौ, शिराविरहितौ=नाडीरहितौ, निगूढगुल्फौ=मांसे पिहितगुल्फौ, कूर्मोन्नतौ=कच्छपपृष्ठसमोन्नतौ, चरणौ=पादौ, मनुजेश्वरस्य=भूपतेः, भवतः ॥ ४८ ॥

स्वरादि के विविध लक्षणों के कथन के बाद अब मनुष्यों के प्रत्येक अंगों के लक्षणों का फल कहते हैं। सर्व प्रथम पैरों के लक्षण कहते हैं—पसीने से रहित,

---

१. तद्यथा बृहत्संहितायामष्टषष्टितमाध्याये आकाशादिप्रकृतिगुणाः—

"भू-जल-शिख्यनिलाम्बरसुर-नर-रक्षः-पिशाचक-तिरश्चाम्।
सत्त्वेन भवति पुरुषो लक्षणमेतद् भवति तेषाम्" ॥ १०८॥

इत आरभ्य "यत्लक्षणज्ञाः प्रवदन्ति सत्त्वम्" इत्यन्तं पुरुषलक्षणाध्यायतो बोद्धव्याः।

कोमल तलहटी वाले, कमल के समान सुशोभित, अंगुलियां आपस में समान रूप से मिली हुई हों, सुन्दर और लाल नख, सुन्दर पार्ष्णि, ( एडी ) वाले, उष्ण स्पर्श वाले, शिराओं से रहित, मांस से ढके हुए गुल्फ वाले और कच्छप ( कछुआ ) की पीठ के समान जिसके पैर का ऊपरी भाग हो ऐसे चिह्नों वाला मनुष्य राजा होता है। अर्थात् राजा के चरण ही इन समस्त लक्षणों से युक्त होते हैं ॥ ४८ ॥

तथा च समुद्रः—

**पादैः समांसैः सुस्निग्धैः सोष्णैः श्लिष्टैः सुशोभनैः ।**
**उन्नतैः स्वेदरहितैः शिराहीनैश्च पार्थिवः ॥ ४९ ॥**

पूर्वश्लोकेन प्रतिपादितलक्षणानि आचार्यः समुद्रोऽपि कथयति—

समांसैः=मांसयुक्तैः, सुस्निग्धैः=सुचिक्कणैः, सोष्णैः=उष्णतासहितैः, श्लिष्टैः=अंगुलीभिः परस्परं मिलितैः, सुशोभनैः, उन्नतैः=उच्चतां गतैः, स्वेदरहितैः=स्वेदवियुक्तैः, शिराहीनैः=नाडीभी रहितैः, पादैः=चरणैः, पार्थिवः राजा भवति ॥ ४९ ॥

आचार्य समुद्र कहते हैं--राजयोग वाले व्यक्तियों के पैर मांसयुक्त, स्निग्ध, उष्ण, अंगुलियाँ आपस में मिली हुई, उनके ऊपर का भाग ऊंचा, पसीने तथा शिराओं ( नाड़ियों ) से रहित होते हैं ॥ ४९ ॥

तथा च गर्गः—

**पद्मरक्तोत्पलनिभैस्तथा क्षतजसन्निभैः ।**
**नृपाः पादतलैर्ज्ञेया ये चान्ये सुखभागिनः ॥ ५० ॥**

गर्गाचार्यः कथयति—पद्मरक्तोत्पलनिभैः=रक्तकमलसदृशप्रभायुक्तैः, तथा क्षतजं=रुधिरं तत्सन्निभैः=तत्तुल्यैः, पादतलैः=चरणयोः अधोभागैः, नृपाः=राजानः ज्ञेयाः=रक्तपादतलयुक्ताः राजान एव भवन्ति । ये चान्ये= अपरजनाः यदि उक्तप्रकारस्य पादतलयुक्ता भवन्ति, तर्हि तेऽपि सुखभागिनः भवन्ति ॥

गर्गाचार्य कहते हैं—लाल कमल के समान प्रभावाले और रुधिर ( खून ) के समान लाल पादतलों वाले पुरुष राजा ( या सर्वोच्च पदाधिकारी ) होते हैं। अन्य साधारण पुरुष भी उक्त प्रकार के पैर वाले सुखों को भोगने वाले होते हैं ॥ ५० ॥

तत्रैवाशुभलक्षणानि

**शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरासंयुतौ,**
**संशुष्कौ विरलाङ्गुली च चरणौ दारिद्रचदुःखप्रदौ ॥ ५१ ॥**

अनेन श्लोकार्द्धेन पादयोरशुभलक्षणानि कथ्यन्ते—शूर्पाकारौ=यथा शूर्पस्य अग्रिमो भागो विस्तृतो भवति तद्वत् विस्तृतौ विरूक्षौ=रूक्षौ, पाण्डुरनखौ=पीताभयुक्तौ चरणयोः नखौ, वक्रौ शिरासन्ततौ=कुटिलौ शिरा-

संयुक्तौ=नाडिकायुक्तौ, संशुष्कौ आर्द्रतारहितौ, विरलाङ्गुली=असम्पृक्ताङ्गुलीभिर्युक्तौ चरणौ दारिद्र्यदुःखप्रदौ=ऐश्वर्याभावसूचकौ, दुःखप्रदौ=कष्टप्रदौ च कथितौ ॥ ५१ ॥

इस श्लोक से पैरों के अशुभ लक्षण बताते हैं–

सूप ( छाज ) के समान चौड़े अग्रभाग वालें, रूखे, भूरे नखों वाले, टेढ़े नाड़ियों से युक्त, शुष्क और विरल अंगुलियों से युक्त पैर दारिद्र्य और दुःख देने वाले होते हैं ॥ ५१ ॥

तथा च समुद्रः —

**शूर्पाकारैस्तथा भग्नैर्वक्रैः शुष्कैः शिरायुतैः ।**
**सस्वेदैः पाण्डुरै रेखैश्चरणैरतिदुःखिनः ॥ ५२ ॥**

आचार्यः समुद्रः कथयति—शूर्पाकारैः, भग्नैः, वक्रैः, शुष्कैः, शिरायुतैः, सस्वेदैः, पाण्डुरैः रेखैः=पीतरेखायुक्तैः चरणैः युक्ताः नरा अतिदुःखिनः=अत्यन्तदुःखानि अनुभवन्ति ॥ ५२ ॥

आचार्य समुद्र कहते हैं–सूप के आकारवाले ( सूप के समान अग्रिम भाग में चौड़े ) बहुत छोटे, टेढ़े, सूखे, नाड़ियों से युक्त, स्वेदयुक्त, पीली रेखा वाले पैर अत्यन्त दुःखी व्यक्तियों के ही होते हैं ॥ ५२ ॥

**मार्गायोत्कटदौ कषायसदृशौ वंशस्य विच्छेददौ,**
**ब्रह्मघ्नौ परिपक्वमृद्द्युतितलौ पीतावगम्यारतौ ॥ ५३ ॥**

कषायसदृशौ=रक्तवर्णयुक्तौ चरणौ मार्गायोत्कटदौ=सर्वदा उत्कटमार्गे गमनशीलौ, तथा वंशस्य=पुत्रपौत्रादीनां विच्छेददौ=वियोगं दत्तः, परिपक्वमृद्द्युतितलौ=अग्निसंयोगात् यथा मृत्तिका रक्ततां गच्छति तद्वत् रक्तवर्णयुक्ततलौ ब्रह्मघ्नौ=ब्राह्मणानां वधकर्तुः चरणौ भवतः, पीतौ=पीतवर्णयुक्तौ चरणौ अगम्यारतौ=अगम्यायां गमनशीलस्य स्तः ॥ ५३ ॥

गेरू के समान रक्त वर्णवाले तलवों से युक्त पुरुष सर्वदा भयंकर मार्ग में चलने वाला होता है और वह वंशविच्छेदकर्ता होता है । पकी हुई मिट्टी के समान रक्तवर्ण तलवे वाले चरण ब्रह्महत्या कराते हैं, पीत (पीले) तलवे अगम्या स्त्री में गमन कराने वालों के होते हैं ॥ ५३ ॥

**उत्कटावध्वनिरतौ कषायौ कुलनाशिनौ ।**
**ब्रह्मघ्नौ दग्धमृद्वर्णावतिपीतावगम्यदौ ॥ ५४ ॥**

यस्य पुरुषस्य चरणौ उत्कटौ=तीक्ष्णौ भयङ्करौ, अध्वनि=मार्गे रतौ=सर्वदा गमनौशीलौ भवतः । यौ च कषायौ चरणौ तौ कुलनाशिनौ=कुलस्य

वंशस्य संहारकारिणौ भवतः। दग्धमृद्वर्णौ=चरणौ ब्रह्मघ्नौ=ब्राह्मणानां हिंसकौ भवतः। पीतौ=पीतवर्णयुक्तौ चरणौ अगम्यदौ=अगम्यायां गमन-शीलस्य भवतः ॥ ५४ ॥

उत्कट पैरवाला पुरुष अहर्निश मार्ग में ही चलता रहता है। अर्थात् प्रत्येक समय इस स्थान से उस स्थान के लिये चलता रहता है। कषाय वर्णवाले चरणों वाला पुरुष अपने कुल का विनाशक होता है। जली हुई मिट्टी के समान आभा-सम्पन्न पैर वाले पुरुष ब्राह्मण-वध करने वाले होते हैं! पीले वर्ण के पैरों वाले पुरुष अगम्या स्त्री के साथ गमन (सम्भोग) में सर्वदा तत्पर रहते हैं ॥ ५४ ॥

### जङ्घोरुजानूनां लक्षणानि

प्रविरलतनुरोमवृत्तजङ्घा द्विरदकरप्रतिभैर्वरोरुभिश्च।
उपचितसमजानवश्च भूपा धनरहिताः श्वशृगालतुल्यजंघाः ॥५४॥

अथ पादलक्षणकथनोपर्यन्तं जङ्घा-ऊरु-जानूनां शुभाशुभलक्षणान्याह— प्रविरलानि=असम्पृक्तानि, तनूनि=सूक्ष्माणि रोमानि वृत्तः=वर्तुलो येषां एवम्भूताभिः जंघाभिः, द्विरदानां=गजानां कराणां शुण्डादण्डानां प्रतिमा=सादृश्यं येषु तैः वरोरुभिश्च=श्रेष्ठजङ्घाशालिभिः, उपचितसमजानवः=उपचितौ समौ जानू येषां ते एवं भूपाः=राजानः भवन्ति, नान्येषामीदृशी प्रशस्तगुणयुक्ता जंघा भवति। येषां श्वः=कुक्कुरः शृगालश्च तयोरिव जंघा भवन्ति ते धनरहिताः=धनधान्यरहिता (दरिद्राः) भवन्ति ॥ ५४क ॥

पादलक्षण-कथन के बाद अब जंघा, ऊरु एवं जानुओं के शुभाशुभ लक्षण कहते हैं—दूर-दूर और छोटे रोमों वाले, गले, हाथी की सूँड़ के समान जंघा वाले, श्रेष्ठ और दोनों समतुल्य जानु वाले राजा होते हैं। कुत्ते और सियार (शृगाल) के समान (पतली, लम्बी) जघा वाले पुरुष धन-धान्य से रहित होते हैं ॥ ५४क ॥

### जङ्घयो रोमलक्षणम्

रोमैकैककूपके पार्थिवानां
द्वे द्वे ज्ञेये पण्डितश्रोत्रियाणाम्।
त्र्याद्यैः निःस्वा मानवा दुःखभाजः
केशाश्चैवं निन्दिताः पूजिताश्च ॥ ५५ ॥

सम्प्रति जङ्घायां रोमावलिलक्षणं कथ्यते—पार्थिवानाम्=राज्ञाम्, जङ्घारोमकूपे=एका एका रोमावली भवति। पण्डितानां=श्रोत्रियाणां, वेद-ज्ञानां=याज्ञिकादीनां च रोमकूपे द्वे द्वे रोमावली भवतः। परन्तु येषां

रोमकूपेषु बहवः रोमास्ते मानवा निर्धनाः तथा दुःखभागिनश्च भवन्ति। अनेनैव प्रकारेण शिरसि कूपेषु केशानामपि फलं ज्ञेयम् ॥ ५५ ॥

राजाओं के एक-एक रोम कूप में एक एक ही रोम होता है; पण्डितों के एक-रोमकूप में दो-दो रोम होते हैं। परन्तु ( एक ही रोमकूप में ) तीन-तीन या इससे अधिक रोम वाले पुरुष निर्धन एवं दुःखी होते हैं। यही बात शिर के रोमकूपों के विषय में समझनी चाहिये ॥ ५५ ॥

तथा च समुद्रः—

**एकरोमो भवेद् राजा द्विरोमश्च महायशाः।**
**त्रिरोमो बहुरोमश्च नरो भाग्यविवर्जितः ॥ ५६ ॥**

( यस्य चेद् ) एकरोमकूपे एकरोमो भवेत् तर्हि राजा भवेद्, द्विरोमयुक्तः=एककूपे द्विरोमवान् पुरुषो महायशाः=महान् यशस्वी भवति। एकरोमकूपे त्रिरोमवान् बहुरोमवान् वा नरः=पुरुषः भाग्यविवर्जितः=भाग्यहीनः ( दुःखभाग् ) भवति ॥ ५६ ॥

इस बात का आचार्य समुद्र भी समर्थन करते हैं--जिसके रोमकूप में एक ही रोम हो वह राजा होता है। एक रोमकूप में दो रोमों वाला पुरुष बहुत यश प्राप्त करता है तथा तीन या बहुत रोमों वाला पुरुष भाग्यहीन होता है ॥ ५६ ॥

**निर्मांसजानुर्म्रियते प्रवासे**
**सौभाग्यमल्पैर्विकटैर्दरिद्राः।**
**स्त्रीनिर्जिताश्चैव भवन्ति निम्नै**
**राज्यं समांसैश्च महद्भिरायुः ॥ ५७ ॥**

निर्मांसजानुः=मांसरहितजंघः पुरुषः, प्रवासे=विदेशे, म्रियते=मृत्युं गच्छति। अल्पैः=लघुजानुभिः सौभाग्यं भुनक्ति। विकटैः=तीक्ष्णजानुभिः युक्ता नरा दरिद्रा भवन्ति। निम्नैः जानुभिश्च युक्ताः स्त्रीभिर्जिता भवन्ति=स्त्रीवशगा भवन्ति। समांसैः=मांसंयुक्तैः जानुभी राज्यं लभन्ते, महद्भिः=बृहद्जानुभिश्च दीर्घजीविनो भवन्ति ॥ ५७ ॥

मांसरहित जानु वाले पुरुष यात्राकाल में ( विदेश में ) मरते हैं। छोटी जानु वाले सौभाग्यशाली होते हैं। तीक्ष्ण, बड़ी ( देखने में अशोभनीय ) जानुवाले दरिद्र होते हैं। निम्न ( नीची ) जानु वाले स्त्रियों के वश में रहते हैं। मांस से भरी हुई जानु वाले राजा होते हैं और बड़ी जानुवाले दीर्घजीवी होते हैं ॥ ५७ ॥

तथा च समुद्रः—

**निर्मांसे जानुनी यस्य प्रवासे म्रियते तु सः ।**
**अल्पैर्भवति सौभाग्यं , विकटैश्च दरिद्रता ॥ ५८ ॥**

स्पष्टार्थः ॥ ५८ ॥

जिसकी जानु मांसरहित होती है वह पुरुष विदेश में मृत्यु पाता है । छोटी जानुवाला सौभाग्यशाली होता है । विकट ( टेढी-मेढी ) जानुवाला दरिद्र होता है ॥ ५८ ॥

**स्त्रीजितः स्यात्तथा निम्नैर्मांसयुक्तैर्नराधिपः ।**
**अतिस्थूलैश्चिरं कालं जीवेदैश्वर्यसंयुतः ॥ ५९ ॥**

स्पष्टार्थः ॥ ५९ ॥

निम्न जानुओं वाला स्त्रीवशगामी होता है । मांसयुक्त जानुवाला राजा होता है । बड़ी मोटी जानु वाला ऐश्वर्ययुक्त होकर बहुत काल तक जीता है ॥ ५९ ॥

लिङ्गस्य लक्षणानि

**लिङ्गेऽल्पे धनवानपत्यरहितः स्थूलेऽपि हीनो धनै-**
**र्मेढ्रे वामनते सुतार्थरहितो वक्रेऽन्यथा पुत्रवान् ।**
**दारिद्र्यं विनते त्वधोऽल्पतनयो लिङ्गे शिरासन्तते,**
**स्थूले ग्रन्थियुते सुखी मृदु करोत्यन्तं प्रमेहादिभिः ॥ ६० ॥**

सम्प्रति लिङ्गस्य-शिश्नस्य ( मूत्रेन्द्रियस्य ) शुभाशुभलक्षणानि कथ्यन्ते-अल्पे लिङ्गे=ह्रस्वे लिंगे सति मनुष्यो धनवान् भवति, किन्तु सः अपत्यरहितः=सन्ततिरहितो भवति । स्थूले लिंगे धनैर्हीनो भवति । वामनते मेढ्रे=लिंगे तथा वक्रे लिंगे सति सुतार्थरहितः=सुतै रहितो धनरहितश्च भवति । अन्यथा=दक्षिणनते वक्रे सति पुत्रवान् भवति । अधो विनते तु-अधोभागे विनतो लिङ्गो दारिद्र्यं करोति, शिरासन्तते सति=नाडीनां प्राचुर्येण दृष्टिपथे आगते सति अल्पतनयः पुरुषो भवति । स्थूलग्रन्थियुते सति पुरुषः सुखी भवति । मृदुग्रन्थियुते सति प्रमेहादिभिः=प्रमेहादिरोगेभ्यः अन्तं=मृत्युम्, करोति ॥ ६० ॥

अब लिङ्ग ( मूत्रेन्द्रिय ) के शुभाशुभ लक्षण कहते हैं-छोटे लिङ्गवाला पुरुष धनी एवं सन्तानरहित होता है । मोटे लिंगवाला धनहीन होता है । जिसका लिङ्ग बाईं ओर को झुका हो और टेढ़ा हो वह पुत्र और धन से हीन होता है । दक्षिण को झुका हो तो पुत्रवान् होता है । नीचे की ओर झुका हो तो दरिद्र होता है । नाड़ियों ( नसों ) से युक्त लिङ्ग थोड़े पुत्र वाले का होता है । मोटी गांठ वाले

लिङ्ग वाला पुरुष सुखी होता है। कोमल गांठ वाले लिङ्ग वाला पुरुष प्रमेह आदि रोगों से मृत्यु को प्राप्त होता है ॥ ६० ॥

अत्रैवान्यलक्षणमाह—

**कोशनिगूढैर्भूपा दीर्घैर्भग्नैश्च वित्तपरिहीनाः।**
**ऋजुवृत्तलघुशिरालशिश्नाश्च भवन्ति धनवन्तः ॥ ६१ ॥**

अत्रैव = लिङ्गविषयकान्यन्यलक्षणानि कथ्यन्ते—(यस्य पुरुषस्य) कोशाः= अण्डकोशाः, मांसे = निगूढा भवन्ति स राजा भवति। दीर्घैः = लम्बायमानैः भग्नैश्च लिङ्गैः पुरुषाः वित्तपरिहीनाः= धनेन रहिता भवन्ति। ऋजवः= सरलाः, वृत्ताः=वर्तुलाः, लघुशिरालाः=सूक्ष्मशिरायुक्ताः येषां शिश्ना भवन्ति एतादृशाः पुरुषा धनवन्तो भवन्ति ॥ ६१ ॥

जिनके लिङ्ग अण्डकोश के मांस में निगूढ (छिपे) होते हैं वे राजा होते हैं। लम्बे और भग्न हों तो वे धनहीन होते हैं। सरल, गोल और सूक्ष्म नाड़ियों से युक्त शिश्न वाले पुरुष धनी होते हैं ॥ ६१ ॥

तथा च समुद्रः—

**दक्षिणावर्तलिङ्गो यः स भवेत् पुत्रवान् नरः।**
**वामावर्ते तथा कन्याः सुबह्व्यः सम्भवन्ति च ॥ ६२ ॥**

यो नरः=यो हि पुरुषः, दक्षिणावर्तलिङ्गः=दक्षिणावनतशिश्नः सः=पुरुषः पुत्रवान् = पुत्रयुक्तो भवेत्। तथा वामावर्ते = वामावर्तलिगे सति पुरुषस्य सुबह्व्यः शोभनगुणयुक्ताः कन्याः सम्भवन्ति=उत्पद्यन्ते ॥ ६२ ॥

आचार्य समुद्र कहते हैं—कि जो मनुष्य दक्षिणावर्त लिङ्गवाला होता है, वह पुत्रवान् होता है। और जो मनुष्य वामावर्त लिङ्गवाला होता है उसके सुन्दर गुणवाली बहुत सी कन्याएँ होती हैं ॥ ६२ ॥

**स्थूलैः सिरालैः कठिनैर्नरा दारिद्र्यभाजनाः।**
**ऋजुभिर्वर्तुलैर्लिङ्गैः पुरुषाः सुखभागिनः ॥ ६३ ॥**

स्थूलैः=स्थूलकायैः, शिरालैः=शिरायुक्तैः, कठिनैः=कठोरैः, लिङ्गैः नराः= पुरुषाः, दारिद्र्यभाजनाः दारिद्र्यस्य पात्राणि = निर्धनाः (भवन्ति)। ऋजुभिः=सरलैः, वर्तुलैः लिङ्गैः=शिश्नैश्च युक्ताः पुरुषाः = नराः, सुखभागिनः= सर्वसुखयुक्ताः ( भवन्ति ) ॥ ६३ ॥

मोटी नाड़ियों से युक्त और कठिन लिङ्गवाले पुरुष दरिद्र होते हैं। तथा सरल—( सीधे ) और गोल लिङ्ग वाले पुरुष समस्त सुख भोगने वाले होते हैं ॥ ६३ ॥

**यस्य पादोपविष्टस्य भूमिं स्पृशति मेहनम्।**
**भोगवान् स तु विज्ञेयो नरो दारिद्र्यभाजनः ॥ ६४ ॥**

यस्य=पुरुषस्य पादोपविष्टस्य=चरणयोरुपरि भारं दत्वोपविष्टस्य मेहनम्=लिंगं भूमिं=पृथ्वीं स्पृशति=पृथिव्याः स्पर्शं करोति, स तु=एतादृशः पुरुषः, भोगवान्=भोगेषु अतीव संलग्नो भवति इति विज्ञेयम्। तथा स नरः दारिद्रचभाजनः=स पुरुषो दरिद्रतां भजते ॥ ६४ ॥

जिस पुरुष का लिङ्ग पैरों पर बैठने से पृथ्वी को छूता हो तो वह पुरुष बहुत अधिक भोगी ( कामुक ) और दरिद्र होता है ॥ ६४ ॥

**भूमौ पादोपविष्टस्य यस्य स्पृशति मेहनम्।**
**भोगवान् स तु विज्ञेयस्तथा तुरगमेहनः ॥ ६५ ॥**

यस्य=पुरुषस्य पादोपविष्टस्य=चरणयोरुपरि भारं दत्वोपविष्टस्य, मेहनम्=लिंगं भूमौ स्पृशति तथा यो हि तुरगमेहनः=अश्वलिङ्गोपमलिङ्गः, स पुरुषः भोगवान्=अतीव भोगे संलग्नो विज्ञेयः ॥ ६५ ॥

पैरों के बल बैठने पर जिस पुरुष का लिङ्ग पृथ्वी को छूता हो और घोड़े के समान लम्बा लिङ्ग हो ऐसे पुरुष बहुत बड़े भोगी होते हैं। अर्थात् अत्यधिक कामी होते हैं ॥ ६५ ॥

**स्थूलग्रन्थियुते लिङ्गे नरोऽतिसुखभाग्भवेत्।**
**लिङ्गेन मृदुना मर्त्यो म्रियते कृच्छ्रपीडितः॥ ६६ ॥**

स्थूलग्रन्थियुते=स्थूलकायग्रन्थियुते लिंगे=शिश्ने ( सति ) नरः=पुरुषः सुखभाग्=समस्तसुखवान् भवेत्। मृदुना=कोमलेन ग्रन्थियुतेन लिंगेन मर्त्यः=पुरुषः, कृच्छ्रपीडितः=मूत्रकृच्छ्रादिरोगेण पीडितः सन् म्रियते=मृत्युं गच्छति ॥ ६६ ॥

स्थूल ग्रन्थि (मोटी गाँठ) से युक्त लिङ्गवाले पुरुष समस्त भोगों के भोगने वाले होते हैं। और कोमल ग्रन्थियुक्त लिङ्ग वाले पुरुष मूत्रकृच्छ्र आदि लिङ्गव्याधियों से पीड़ित रहते हैं तथा इन्हीं रोगों के कारण मृत्यु को प्राप्त होते हैं ॥ ६६ ॥

वृषणलक्षणम्

**जले मृत्युरेकवृषणो विषमैः स्त्रीचञ्चलः।**
**समैः क्षितिपः ह्रस्वायुश्चोद्बद्धैः प्रलम्बवृषणस्य शतमायुः ॥ ६७ ॥**

लिङ्गलक्षणकथनानन्तरं सम्प्रति वृषणस्य लक्षणानि उच्यन्ते--

यस्य पुरुषस्य एकं वृषणं वर्तते तस्य जले=जलमध्ये मृत्युः भवति। विषमैः=यस्य उभयोः वृषणयोः वैषम्यं वर्तते सः स्त्रीषु चञ्चलः=कामिनीषु चपलो भवति। समैः वृषणयुक्तैः क्षितिपः पृथ्वीपतिः भवति। उद्बद्धैः=शिराभिः आबद्धैः वृषणैः, ह्रस्वायुः=अल्पायुः भवति। प्रलम्बवृषणस्य=लम्बायमानवृषण-युक्तस्य पुरुषस्य शतमायुः=शतवर्षपर्यन्तम् आयुः भवति, अर्थात् दीर्घायु-र्भवति ॥ ६७ ॥

एक अण्डकोश वाले पुरुष की जल में मृत्यु होती है। विषम (छोटे-बड़े) अंण्ड-कोशों वाला स्त्रियों में चंचल होता है। समान अंडकोशों वाला राजा होता है। नसों (नाड़ियों) से आबद्ध अंडकोश वाला अल्पायु होता है। लम्बे अंडकोशों वाला सौ वर्ष तक जीने वाला होता है ॥ ६७ ॥

तथा च समुद्रः--

**एकाण्डो जलमृत्युः स्याद्विषमे स्त्रीषु चञ्चलः।**
**समाण्डो नरनाथश्च संलग्नैरल्पजीवनः ॥ ६८ ॥**

उक्तं श्लोकार्थमेव समर्थयति आचार्य समुद्रः—एकाण्ड इति।

एकाण्डः=एकः अण्डकोशो यस्य स एकाण्डः पुरुषः, जलमृत्युः=जले मृत्युः यस्य एवम्भूतो भवेत्। विषमे=एके ह्रस्वे अपरे च लम्बायमाने शिश्ने पुरुषः स्त्रीषु=नारीषु चञ्चलः=चपलो भवति (स्त्रीणां मध्ये निर्लज्जो भूत्वा व्यवह-रीतीत्यर्थः)। समाण्डः=यस्य उभावपि अण्डकोशौ समौ एतादृशः पुरुषः, नरनाथः=नराणां पुरुषाणां नाथः=राजा भवति। संलग्नैः=सम्पृक्ताण्डकोषैः पुरुषः अल्पजीवनः=स्वल्पजीवनयुक्तो भवति ॥ ६८ ॥

पूर्व श्लोक द्वारा वर्णित विषय को पुष्ट करते हुये आचार्य समुद्र कहते हैं—जिस पुरुष को एक ही अण्डकोश होता है वह पुरुष जल में डूबकर मृत्यु प्राप्त करता है। विषम अण्डों वाले पुरुष स्त्रियों में चपल ( कामुक ) होते हैं। समान अण्डकोश वाला पुरुष राजा होता है। एक साथ संलग्न अण्डों वाला पुरुष अल्पजीवी होता है ॥ ६८ ॥

**प्रलम्बाण्डप्रमाणं तु शतं जीवति मानवः ॥**

प्रलम्बाण्डप्रमाणं ( प्रलम्बमण्डस्य प्रमाणं यस्य सः ) =लम्बायमानः अण्डकोशो यस्य मानवस्य स मानवः शतम्=शतवर्षपर्यन्तं जीवति=जीवनं धारयति ॥

लम्बे अण्डकोशों वाला पुरुष सौ वर्षों तक जीता है ॥

मणि-मूत्र-लक्षणानि

**रक्तैराढ्या मणिभिर्निर्द्रव्याः पाण्डुरैश्च मलिनैश्च।**
**सुखिनः सशब्दमूत्रा निःस्वा निःशब्दमूत्रधाराश्च ॥ ६९ ॥**

सम्प्रति-मणि-मूत्रयोः लक्षणानि उच्यन्ते—रक्तैः=रक्तवर्णैः=मणिभिः=शिश्नस्य अग्रभागे पुरुषाः आढ्याः=धनयुक्ता भवन्ति। पाण्डुरैः=पाण्डुरवर्णैः मलिनैश्च मणिभिः निर्द्रव्याः=द्रव्यरहिता भवन्ति। सशब्दमूत्राः=शब्देन सहितं मूत्रं येषां ते सुखिनः=सुखेन युक्ता भवन्ति। येषां=निःशब्दमूत्रधारा=शब्दरहिता मूत्रधारा ते पुरुषा निःस्वाः=धनरहिता भवन्ति ॥ ६९ ॥

अब आचार्य मणि एवं मूत्र के लक्षण बताते हैं—लाल मणि ( शिश्न के अग्रभाग ) वाले पुरुष धनी होते हैं। पाण्डुर और मलिन मणिवाले निर्धन होते हैं। शब्द से युक्त मूत्रधारा वाले सुखी होते हैं। जिनकी मूत्रधारा में शब्द नहीं होता वे निर्धन होते हैं ॥ ६९ ॥

**द्वि-त्रि-चतुर्धाराभिः प्रदक्षिणावर्तवलितमूत्राभिः ।**
**पृथिवीपतयो ज्ञेया विकीर्णमूत्राश्च धनहीनाः ॥ ७० ॥**

( येषां मूत्रं ) द्वि-त्रि-चतुर्धाराभिः तथा प्रदक्षिणावर्तचलितमूत्राभिः ( भूमौ पतति, ते ) पृथिवीपतयः=राजानो ज्ञेयाः । विकीर्णमूत्राः=प्रस्फुटित-धारायुक्ता ये पुरुषाः ते धनहीनाः=धनविरहिता भवन्ति ॥ ७० ॥

जिनका मूत्र दो, तीन या चार धारा में दक्षिणावर्त होकर गिरता हो वे राजा होते हैं। और जिनका मूत्र विकीर्ण प्रस्फुटित धारा के रूप में गिरता हो वे निर्धन होते हैं ॥ ७० ॥

**एकैव मूत्रधारा वलिता रूपप्रधानसुतदात्री ।**
**स्निग्धोन्नतसममणयो धन-वनिता-रत्नभोक्तारः ॥ ७१ ॥**

एका एव वलिता=वेगयुक्ता मूत्रस्य धारा रूपयुक्तं पुत्रं प्रददाति । येषां स्निग्धाः=चिक्कणाः उन्नतसमाश्च मणयः=शिश्नस्य अग्रभागा भवन्ति । ते पुरुषा धनस्य, वनितायाः, रत्नानां च भोक्तारो भवन्ति ॥ ७१ ॥

एक ही वेगयुक्त मूत्र की धारा रूपवान् पुत्र को देती है। जिनकी स्निग्ध=चिकनी ऊँची और समान मणि होती है वे धनधान्य, स्त्री और रत्नों को भोगने वाले होते हैं ॥ ७१ ॥

**मणिभिश्च मध्यनिम्नैः कन्यापितरो भवन्ति निःस्वाश्च ।**
**बहुपशुभाजो मध्योन्नतैश्च नात्युल्वणैर्धनिनः ॥ ७२ ॥**

मध्यनिम्नैः=मणेः मध्यभागे निम्ने सति पुरुषाः कन्यानां=बालिकानाम् पितरो भवन्ति । तेषां पुत्ररत्नं न जायते । तथा ते निःस्वाश्च=निर्धनाश्च भवन्ति । मणेर्मध्यभागेन उन्नतौ च सत्यां पुरुषाः बहुपशुभिः=बहुगो-महिष्यादिभिर्युक्ता भवन्ति । स एव मध्यभागे यदि अत्युल्वणो नास्ति ( अवलोकने भयानको नास्ति ) तर्हि स धनी भवति ॥ ७२ ॥

यदि किसी पुरुष की मणि का मध्यभाग नीचा हो तो वह पुरुष कन्याओं का पिता एवं निर्धन होता है। उसे पुत्र नहीं होता। यदि मणि का मध्यभाग उन्नत हो तो वह गौ-भैंस आदि पशुओं का सुख भोगने वाला पुरुष होता है। यदि मध्यभाग उन्नत हो किन्तु भयंकर न हो तो वह धनी भी होता है ॥ ७२ ॥

तथा च—

**रत्नाकृतिर्मणिर्यस्य समे मध्ये विराजिते ।**
**पार्थिवः स तु विज्ञेयः समुद्रवचनं यथा ॥ ७३ ॥**

समुद्रस्य वचनं यथा=अनेन प्रकारेण, तथा च इति । यस्य पुरुषस्य मणिः=शिश्नस्य अग्रिमो भागः, रत्नाकृतिः=रत्नानामिव आकृतिर्यस्य स एतादृक्=मध्यभागस्य शोभेव विराजते तथा मध्यभागे समे सति पुरुषः पार्थिवः=राजा, विज्ञेयः=ज्ञातव्यः ॥ ७३ ॥

आचार्य समुद्र का कथन है कि—जिस पुरुष की मणि छह रत्नों के समान मध्यभाग में सम हो और शोभायुक्त हो वह राजा होता है ॥ ७३ ॥

**सुवर्णरजतप्रख्यैः मणिमुक्तासमप्रभैः ।**
**प्रवालसदृशैः स्निग्धैर्मणिभिः पार्थिवो भवेत् ॥ ७४ ॥**

यस्य पुरुषस्य-सुवर्ण-रजतमणि-मुक्तादीनां या प्रभा तादृशप्रभाशीलैः तथा प्रवालसदृशः=प्रवालः ( मूंगा इति हिन्दीभाषायाम् ) इव स्निग्धैः= चिक्कणैः मणिभिः=शिश्नस्य अग्रिमभागैः, नरः पार्थिवः=राजा भवेत्=राजा स्यात् ॥ ७४ ॥

जिस पुरुष की मणि ( शिश्न का अग्रिभाग ) सुवर्ण, चांदी, माणिक और मोती की शोभा के समान सुशोभित हो तथा मूंगे के समान स्निग्ध ( चिक्कण ) हो तो वह पुरुष राजा होता है ॥ ७४ ॥

**पाण्डुरैर्मलिनैः रूक्षैः श्यावैरल्पैश्च निर्धनः ।**
**मूत्रधारा पतेद् देहाद् दक्षिणावलिता यदि ॥ ७५ ॥**
**पार्थिवः स तु विज्ञेयः समुद्रवचनं यथा ॥ ७६ ॥**

पाण्डुरैः=पीतवर्णयुक्तैः मलिनैः, रूक्षैः=शुष्कैः श्यावैः=कृष्णैः, अल्पैः= ह्रस्वैः मणिभिः, नराः निर्धनाः=धनरहिताश्च भवन्ति । यस्य देहात्= शरीरात् (शिश्नात्) दक्षिणावलिता=दक्षिणावर्ता मूत्रधारा=मूत्रस्य धारा पतेत्=निःसरति, स पुरुषः, तु=निश्चयेन, पार्थिवः=भूपतिः, विज्ञेयः= ज्ञातव्यः । अनेन प्रकारेण समुद्राचार्यस्य वचनानि सन्ति ॥ ७६ ॥

जिसकी मणि कुछ पीले रंग से युक्त, मलिन, रूखी और छोटी हो वह निर्धन होता है । जिसके शिश्न से दक्षिण की ओर घूमी हुई मूत्र की धारा पृथ्वी पर गिरती हो तो वह राजा होता है—ऐसा समुद्राचार्य का मत है ॥ ७५-७६ ॥

**द्विधारं च पतेन्मूत्रं स्निग्धं शब्दविवर्जितम् ।**
**भोगवान् स तु विज्ञेयो गवाढ्यो नात्र संशयः ॥ ७७ ॥**

यस्य पुरुषस्य मूत्रम् द्विधारम्=धाराद्वये विभक्तं पतेत्, किन्तु स्निग्धम्= स्नेहिलं स्यात्, न तु शब्दविवर्जितम्=न तु शब्दयुक्तं च वर्तते, स पुरुषः

भोगवान्=भोग्यपदार्थैर्युक्तो भवति। तथा गवाढ्यः=गोभिः पशुभिः (धनी) भवति। अत्र=अस्मिन् विषये न संशयः=न संदेहः॥ ७७॥

जिस पुरुष का मूत्र दो धाराओं में पृथ्वी पर गिरता है और स्निग्ध तथा शब्द-रहित होता है, वह पुरुष भोग्य पदार्थों से युक्त एवं बहुत गौओं से युक्त होता है—इसमें कोई संशय नहीं है॥ ७७॥

**बहुधारे तथा रूक्षे सशब्दे पुरुषाधमः॥ ७७ क॥**

यस्य पुरुषस्य मूत्रं बहुधारं रूक्षं सशब्दं पतति स पुरुषः अधमः=नीचो भवति (नीचकर्मरतो भवति)॥ ७७ क॥

जिस पुरुष का मूत्र बहुत धाराओं से युक्त, रूक्ष तथा शब्द से युक्त पृथ्वी पर गिरता हो वह पुरुष नीच कर्मकारी होता है॥ ७७क॥

वस्ति-शुक्र-मैथुननां लक्षणानि

**परिशुष्कवस्तिशीर्षैर्धनरहिता दुर्भगाश्च विज्ञेयाः।**
**कुसुम-समगन्धशुक्रा विज्ञातव्या महीपालाः॥ ७८॥**

येषां परिशुष्कवस्तिशीर्षैः=वस्तिः नाभिप्रदेशात् चतुरंगुलमात्रः अधोभागस्थः प्रदेशः, यदि=चेत् सर्वथा शुष्को वर्तते तथा शिरायुक्तो वर्तते तर्हि ते पुरुषाः धनरहिताः दुर्भगाश्च=भाग्यहीनाश्च विज्ञेयाः=ज्ञातव्याः। कुसुमम्=पुष्पम् इव गन्धो यस्य एतादृशम् शुक्रम्=वीर्यम् येषां ते पुरुषाः महीपालाः=महीं=पृथ्वीं पालयन्तीति महीपालाः=राजानः, विज्ञेयाः=ज्ञातव्याः॥ ७८॥

नाभि से चार अंगुल नीचे के स्थान को वस्ति कहते हैं। वह वस्ति प्रदेश जिनक शुष्क एवं नाड़ियों से युक्त होता है वे धनरहित और भाग्यहीन पुरुष होते हैं। पुष्पों की गन्ध से युक्त वीर्य वाले पुरुष राजा होते हैं॥ ७८॥

**मधुगन्धे बहुवित्ता मत्स्यगन्धे बहून्यपत्यानि।**
**तनुशुक्रः स्त्रीजनको मांसगन्धो महाभोगी॥ ७९॥**

मधुः=पुष्पाणां रसः तद्वत् गन्धो यस्य स एवम्भूते वीर्ये बहुवित्ताः=बहुधनयुक्ताः पुरुषा भवन्ति। मत्स्यगन्धे=मत्स्योपगन्धयुक्ते वीर्ये सति बहूनि अपत्यानि जायन्ते=बहुसन्तानयुक्तो नरो भवति। तनुशुक्रः=तनु कृशं शुक्रं=वीर्यं यस्य स स्त्रीजनकः=कन्याजनको भवति। मांसगन्धो=मांस इव गन्धवान् वीर्ययुक्तः पुरुषो महाभोगी=महाभोगेषु प्रसक्तो भवति॥ ७९॥

शहद के समान गन्ध युक्त वीर्यवाला पुरुष धनी, मछली के समान गन्ध युक्त

वीर्यवाला बहुत सन्तानों से युक्त होता है। थोड़े वीर्य वाला अनेकों कन्याओं का पिता होता है। मांस के समान गन्ध से युक्त वीर्यवाला महान् भोगी होता है ॥७९॥

**मदिरागन्धे यज्वा क्षारसगन्धे च रेतसि दरिद्रः।**
**शीघ्रं मैथुनगामी दीर्घायुरतोऽन्यथाऽल्पायुः ॥ ८० ॥**

मदिरा=मादकपदार्थ इव गन्धो यस्य तस्मिन् वीर्ये पुरुषः यज्वा=यज्ञकर्ता भवति। क्षारसगन्धे=क्षारोपमगन्धयुक्ते रेतसि=वीर्ये सति पुरुषो दरिद्रः=निर्धनो भवति। शीघ्रं मैथुनगामी=मैथुनसमये यस्य झटिति एव चरमोत्कर्षेण=शीघ्रपतनं भवति स दीर्घायुर्भवति। अतोऽन्यथा=बहुकालपर्यन्तं कर्मणि समर्थः=विलम्बेन क्षरति स पुरुषोऽल्पायुर्भति ॥ ८० ॥

धनिकों का वीर्य मदिरा ( शराब ) की गन्ध के समान गन्धवाला होता है। क्षार के समान गन्धवाले वीर्य से युक्त दरिद्र होते हैं। और बहुत देर तक मैथुन करने वाले पुरुष अल्पायु होते हैं ॥ ८० ॥

तथा च—

**विस्तीर्णमांसला स्निग्धा वस्तिः पुंसां प्रशस्यते।**
**निर्मांस-कर्कशा रूक्षा दुःख-दारिद्र्यदा स्मृता ॥ ८१ ॥**

तथा च विस्तीर्णमांसला=स्निग्धा=चिक्कणा वस्तिः, पुंसां=पुरुषाणां प्रशस्यते=श्रेष्ठपुरुषाणां एतादृशी वस्तिः भवति। मांसरहिताः कर्कशा=काठिन्ययुक्ता, रूक्षा=वस्तिः दुःखस्य दारिद्र्यस्य प्रदात्री स्मृता=कथिता ॥८१॥

और भी—श्रेष्ठ पुरुषों की वस्ति विस्तीर्ण मांस से युक्त तथा स्निग्ध=चिकनी होती है और मांसरहित कठोर एवं रूक्ष (रूखी) बस्ति दुःखों और दरिद्रता को प्रदान करने वाली होती है ॥ ८१ ॥

**गोमायुसदृशा यस्य खरोष्ट्रमहिषस्य च।**
**स भवेद् दुःखितो नित्यं धनहीनश्च मानवः ॥ ८२ ॥**

( यस्य ) गोमायुः=शिवा सदृशा वस्तिः, खरस्य उष्ट्रस्य, महिषस्य इव बस्तिः भवति स मानवः=पुरुषः नित्यं सर्वदा दुखितः=विविधकष्टान् अनुभवति, तथा धनहीनश्च=धनेन रहितश्च भवति ॥ ८२ ॥

सियार, गदहा, ऊँट और भैंसों के समान वस्ति वाला पुरुष सर्वदा दुःखों को भोगने वाला और धन से हीन होता है ॥ ८२ ॥

तथा च—

**पुष्पगन्धो भवेद् राजा बहुस्वो मधुगन्धितः।**
**मत्स्यगन्धः पुत्रवान् स्यात् स्त्रीप्रजस्तनुरेतसः ॥ ८३ ॥**

तथा च=पुनः कथयति, पुष्प इव गन्धवान् वीर्ययुक्तो राजा भवेत्, मधुगन्धितो बहुस्वः बहुधनयुक्तो भवति । मत्स्यगन्धः पुरुषः पुत्रवान्=पुत्रयुक्तो भवति । तनुरेतसः=क्षीणवीर्ययुक्तस्य ( स्वल्पवीर्ययुक्तस्य ) पुरुषस्य कन्या उत्पदद्यते । अनेनास्य पुत्राभावो द्योतते ॥ ८३ ॥

और भी कहते हैं--जिसके वीर्य में पुष्पों की गन्ध हो वह राजा होता है । मधु ( शहद ) की गन्धवाला बहुत धनी होता है । जिसका वीर्य मछली की गन्धवाला होता है और अल्पवीर्यवाला कन्या-सन्तति वाला होता है ॥ ८३ ॥

**मांसगन्धो महाभोगी याज्ञिको मदिरासमः ।**
**गन्धो येषां क्षारसमस्ते निःस्वा मनुजाः स्मृताः ॥ ८४ ॥**

मांसवत् गन्धो यस्य स महाभोगी भवति । मदिरासमगन्धवीर्यो याज्ञिकः=यज्ञादीनां कर्ता भवति । येषाम्=पुरुषाणां वीर्ये क्षारसमः=क्षार इव गन्धस्ते मनुजाः=पुरुषाः निःस्वाः=धनरहिताः स्मृताः=कथिताः ॥ ८४ ॥

मांस के समान गन्ध वाले पुरुष महाभोगी होते हैं । मदिरा के समान गन्धयुक्त वीर्यवाले यज्ञकर्ता होते हैं । क्षार के समान गन्धयुक्त वीर्यवाले पुरुष निर्धन होते हैं ॥ ८४ ॥

**चिरमैथुनगामी यः स ह्रस्वायुर्भवेन्नरः ॥८४क॥**

चिरमैथुनगामी यः=यः चिरकालपर्यन्तं मैथुने प्रवृत्तो भवति सः नरः=पुरुषः ह्रस्वायुः=अल्पायुः भवेत् । ( सम्भोगे विलम्बेन रेतः स्खलित भवति यस्य सोऽल्पायुर्भवतीति तात्पर्यम् ) ॥ ८४ क ॥

अधिक देर तक मैथुन करने वाला पुरुष थोड़ी आयु वाला होता है ॥ ८४क ॥

स्फिग्-लक्षणम्

**निःस्वोऽतिस्थूलस्फिक् समांसलस्फिक् सुखान्वितो भवति ।**
**व्याघ्रान्तोऽध्यर्धस्फिङ् मण्डूकवन्नराधिपतिर्भवति ॥ ८५ ॥**

अतिस्थूलस्फिक्=अत्यन्त वृहत् कटिप्रोथः स्थूलस्फिग्वान् पुरुषः=निस्वः=धनरहितो भवति । समांसलस्फिक्=मांसयुक्तस्फिग्वान्, सुखान्वितः=सुखेन युक्तो भवति । अर्धस्फिग्वान् पुरुषो व्याघ्रेण अन्तो यस्य एवम्भूतो भवति । मण्डूकवत् स्फिग्वान् नराधिपः=राजा भवति ॥ ८५ ॥

अत्यन्त स्थूल ( मोटे ) स्फिग् ( कूल्हे ) वाला निर्धन होता है । मांस से युक्त स्फिग्वाला समस्त सुखों से युक्त होता है । अर्धस्फिग् वाला पुरुष व्याघ्र से मृत्यु पाता है । मण्डूक (मेढ़क) के समान स्फिग् वाला राजा होता है ॥ ८५ ॥

तथा च समुद्रः—

**अतिस्थूलौ स्फिचौ यस्य निर्धनः स भवेन्नरः ।**
**समांसलस्फिक् सुखितो मण्डूकस्फिङ् नराधिपः ॥ ८६ ॥**

भावार्थः स्पष्ट एव । ( पूर्वश्लोके व्याख्या जाता ) ॥ ८६ ॥

इस श्लोक की भाषा सरल ( पूर्वश्लोक की तरह ) ही है । अतः विशेष व्याख्या नहीं की जा रही है ॥ ८६ ॥

**अध्यर्धस्फिङ् नरो यस्तु व्याघ्रान्तः स तु कीर्तितः ॥ ८७ ॥**

यस्तु=यो हि पुरुषः, अध्यर्धस्फिग्=अर्धस्फिग्युक्तः अर्थात् अपूर्णविकसितस्फिग् यस्य स नरः व्याघ्रान्तः=व्याघ्रेण अन्तः=अवसानं यस्य सः ( व्याघ्रद्वारा मृत्युं गच्छति ), आचार्यैः कीर्तितः=कथितः ॥ ८७ ॥

जो पुरुष अर्धस्फिग् वाला होता है उसकी मृत्यु व्याघ्र द्वारा होती है—ऐसा आचार्य का मत है ॥ ८७ ॥

कटि-जठर-लक्षणम्

**सिंहकटिर्मनुजेन्द्रः कपिकरभकटिर्धनैः परित्यक्तः ।**
**समजठरो भोगयुतो घट-पिठरनिभोदरो निःस्वः ॥ ८८ ॥**

सिंहकटिः=सिंह इव कटिः यस्य सः ( कृशकटिः ), मनुजेन्द्रः=मानवानामधिपः=राजा भवति । कपिकरभकटिः=कपिः=वानरः, करभः=उष्ट्रस्तद्वत् कटियुक्तः पुरुषः, धनैः परित्यक्तः=निर्धनो भवति । समजठरः=समानोदरयुक्तः पुरुषः भोगयुतः=भोग्यपदार्थेन युक्तो भवति । घटपिठरनिभोदरः=घटपिठरनिभः-पिठरः=धान्यरक्षार्थं पात्रविशेषः, घटेन पिठरेण च निभं=तुल्यम् उदरं यस्य सः पुरुषः निःस्वः=धनरहितो भवति ॥ ८८ ॥

सिंह के समान कृश ( पतली ) कटि ( कमर ) वाले राजा होते हैं । बन्दर और ऊँट के समान कटि वाले निर्धन होते हैं । समान उदर ( पेट ) वाले पुरुष भोग्यपदार्थों से युक्त होते हैं । घड़े और पिठर ( मिट्टी का बड़ा बर्तन जिसे कोठिला कहते हैं ) के समान पेट वाले निर्धन होते हैं ॥ ८८ ॥

तथा च—

**सिंहतुल्या कटिर्यस्य स नरेन्द्रो न संशयः ।**
**श्व-शृङ्गाल-खरोष्ट्रैश्च तुल्या यस्य स निर्धनः ॥ ८९ ॥**

यस्य पुरुषस्य कटिः=कटिप्रदेशः, सिंहतुल्या=केसरीव सूक्ष्मा ( कृशा ) कटिः भवति स पुरुषो नरेन्द्रः=नराणामिन्द्र इव विभाति=राजा भवति ।

अस्मिन् विषये न संशयः=संशयस्य स्थानं नास्ति। श्वः=कुक्कुरः, शृगालः=शिवा, खरः=गर्दभः उष्ट्रः एतैस्तुल्या कटिः यस्य स पुरुषः निर्धनः=धनरहितो भवति ॥ ८९ ॥

जिस पुरुष की कटि ( कमर ) सिंह के समान कृश अर्थात् पतली होती है वह राजा होता है—इसमें सन्देह नहीं। और जिसकी कमर कुत्ते, सियार, गदहे या ऊँट के समान होती है वह निर्धन होता है ॥ ८९ ॥

**समोदरा भोगयुता विषमा निर्धनाः स्मृताः ॥ ९० ॥**

समोदराः=समानोदरयुक्ताः पुरुषाः, भोगयुताः=भोग्यपदार्थेन सम्पन्नाः (भवन्ति)। विषमाः=चक्रोदरयुक्ताः पुरुषा निर्धनाः=धनरहिताः, स्मृताः=कथिताः ( शास्त्रकारैरिति शेषः ) ॥ ९० ॥

समान उदर ( पेट ) वाले पुरुष समस्त भोग्य पदार्थों से युक्त होते है। विषम=टेढे पेट वाले निर्धन होते हैं ॥ ९० ॥

पार्श्व-कुक्षि-उदरलक्षणानि

**अविकलपार्श्वा धनिनो निम्नैर्वक्रैश्च भोगसन्त्यक्ताः।**
**समकुक्षाश्च भोगाढ्या निम्नैश्च भोगसन्त्यक्ताः ॥ ९१ ॥**

अथ=कटि-जठरयोः वर्णनानन्तरं पार्श्वकुक्ष्युदराणाम्=कटेः उपरि चतुरङ्गुलो भागः पार्श्वशब्दवाच्यः, कुक्षिः=बाह्वोरधोभागः कुक्षिः, उदरम् च तेषां लक्षणानि कथ्यन्ते—

अविकलः=समानरूपेण पार्श्वौ येषां ते नराः धनिनः=धनयुक्ता भवन्ति। निम्नैः=समानाभावयुक्तैः वक्रैश्च पार्श्वैः भोगसन्त्यक्ताः=भोगादिभी रहिता भवन्ति। समकुक्षाः=समानकुक्षयुक्ता नरा भोगाढ्याः=भोग्यपदार्थेन आढ्याः=सम्पन्नाः भवन्ति। निम्नैः कुक्षैः, भोगसंत्यक्ताः=भोगरहिता निर्धना भवन्ति ॥ ९१ ॥

अब कटि और जठर के बाद पार्श्व[1] कुक्षि और उदर के लक्षण कहते हैं—जिसके दोनों पार्श्व भाग समान होते हैं वह धनी होता है। निम्न और वक्र=टेढे पार्श्व वाला व्यक्ति भोगरहित होता है। समान पार्श्व वाला भोग्यपदार्थों से युक्त होता है ॥ ९१ ॥

**उन्नतकुक्षाः क्षितिपाः कुटिलाः स्युर्मानवाः।**
**विषमकुक्षाः सर्पोदरा दरिद्रा भवन्ति बह्वाशिनश्च ॥९२॥**

---

१. कमर ( कटि ) के उपरितन चार अंगुल के भाग को 'पार्श्व' कहते हैं।

उन्नतकुक्षाः नरा। क्षितिपाः=राजानो भवन्ति। विषमकुक्षाः-असमान-कुक्षयुक्ताः नराः कुटिला। स्युः-भवेयुः। सर्पोदराः-सर्पवत् उदरयुक्ता नराः दरिद्राः=लक्ष्मीरहिताः, वह्वाशिनश्च=अधिकभोजनकर्तारश्च भवन्ति॥

उन्नत कुक्षि ( कोंख ) वाले राजा होते हैं, विषम कुक्षि वाले कुटिल होते हैं, सर्प के समान कुक्षि वाले पुरुष दरिद्र एवं बहुत अधिक भोजन करने वाले होते हैं॥ ९२॥

तथा च समुद्रः—

**पार्श्वैः समांसोपचितैर्धनिनो मानवाः स्मृताः।**
**निम्नैर्वक्रैश्च विषमैर्नरा भोगविवर्जिता॥ ९३॥**

समांसोपचितैः-मांसेन युक्तैः पार्श्वैः मानवाः-नराः धनिनः स्मृताः=कथिताः। निम्नैः वक्रैः-विषमैः पार्श्वयुक्तैर्नरा भोगविवर्जिताः कथिताः॥

जिसके पार्श्वभाग मांस से उन्नत हों तो वह धनी होता है, परन्तु निम्न, टेढे और विषम पार्श्व वाले मानव भोगरहित होते हैं॥ ९३॥

**नृपाश्चोन्नतकुक्षाः स्युर्विषमाभिर्दुराशयाः।**
**सर्पोदरा नता निःस्वाः स्मृता वह्वाशिनस्तथा॥ ९४॥**

स्पष्टार्थ। ॥ ९४॥

उन्नत कोंख वाले राजा होते हैं। विषम कुक्षि ( कोंख ) वाले दुष्ट होते हैं और सर्प के पेट के समान नीची कोंख वाले निर्धन और अधिक भोजन करने वाले होते हैं॥ ९४॥

## नाभिलक्षणम्

**परिमण्डलोन्नताभिर्विस्तीर्णाभिश्च नाभिभिः सुखिनः।**
**स्वल्पा त्वदृश्यनिम्ना नाभिः क्लेशवहा भवति॥९५॥**

सम्प्रति नाभेर्लक्षणानि कथ्यन्ते—उन्नताभिः परिमण्डलाभिः विस्तीर्णाभिश्च नाभिभिर्युक्ताः पुरुषाः सुखिनः=सुखभाजो जना अनुमीयन्ते। सुखयुक्तानां जनानामेतादृशी नाभिः भवति। स्वल्पा=लघ्वी, अदृश्या=साधुतया दृष्टिङ्गता न भवति। तथा निम्ननाभियुक्ताः पुरुषाः क्लेशान्=कष्टान् भजन्ति॥ ९५॥

अब नाभि के लक्षण कहते हैं -जिनकी ऊँची मण्डलाकार विस्तारवाली नाभि हो ऐसे मानव सुखी होते हैं और छोटी और अदृश्य (कम दिखाई पड़ने वाली), नीची नाभि कष्ट देने वाली होती है॥ ९५॥

**वलिमध्यगता विषमा शूलबाधं करोति नैःस्वं च ।**
**शाठ्यं वामावर्ता करोति मेधां प्रदक्षिणतः ॥ ९६ ॥**

यस्य नाभौ मध्ये विषमा वलिरेखा भवति स तस्य पुरुषस्य शूलबाधं–शूलपीडां करोति, तस्य सदैव तथैव पीडया मृत्युः भवति, जीवनकाले स पुरुषो निर्धनो भवति । वामावर्ता नाभिः यस्य स शठो भवति । प्रदक्षिणतः–दक्षिणावर्ता नाभिः मेधां–बुद्धिं प्रददाति ॥ ९६ ॥

जिस व्यक्ति की नाभि में विषम रेखा होती है उसे उदरशूल की पीड़ा और शूल पीड़ा द्वारा ही मृत्यु होती है । तथा वह जीवनकाल में निर्धन होता है ॥ ९६ ॥

१. शाठ्य-लक्षणम्—

**वचसा मनसा यश्च दृश्यते कार्यतत्परः ।**
**कर्मणा विपरीतश्च स शठः सद्भिरिष्यते ॥ १ ॥**

प्रसङ्गवशाच्छाठ्यलक्षणं स्पष्टयति ग्रन्थकारः । अन्यत् स्पष्टम् ॥ १ ॥

जो वाणी और मन से कार्य में तत्पर दिखाई पड़ता हो किन्तु कर्म से विपरीत हो विद्वान् लोग उसे 'शठ' कहते हैं ॥ १ ॥

२. मेधालक्षणम्—

**शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।**
**ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥ २ ॥**

मेधालक्षणमपि स्पष्टयति ग्रन्थकारः । अन्यत् स्पष्टम् ॥ २ ॥

सेवा, सुनना, ग्रहण करना, सुनी वस्तु का धारण करना, उहापोह ( तर्कपूर्ण विचार या विवेचन ) अर्थविज्ञान=अर्थबोध और तत्त्वज्ञान ये बुद्धि के गुण हैं ॥२॥

**पार्श्वायता चिरायुषमुपरिष्टाच्चेश्वरं गवाढ्यमधः ।**
**शतपत्रकर्णिकाभा नाभिर्मनुजेश्वरं कुरुते ॥ ९७ ॥**

पार्श्वायता=पार्श्वभागे आयता विस्तृता नाभिः, मनुष्यं चिरायुषम्–चिरकालजीविनं करोति । उपरिष्टात्=उपरिभागे आयता विस्तृता नाभिः ईश्वरं=राजानं करोति । यस्य अधः=अधोभागे नाभिः विस्तृता चेत् सा नरं गवाढ्यम्=गोभिः सम्पन्नं करोति । शतपत्रकर्णिकाभा=कमलवत् नाभिः तं मनुजेश्वरं=मानवेश्वरम् ( राजानं ) कुरुते=करोति ॥ ९७ ॥

जिसकी नाभि पार्श्वभाग में चौड़ी हो तो वह दीर्घजीवी और ऊपर का भाग चौड़ा हो तो वह धनी और राजा के समान होता है । नाभि के नीचे का

भाग चौड़ा हो तो वह बहुत-सी गौओं का मालिक होता है। और जिसकी नाभि कमल के समान हो तो वह राजा होता है ॥ ६७ ॥

तथा च समुद्रः—

**वर्तुला विपुलाऽत्युच्चा नाभिर्यदि नरेश्वरः।**
**अल्पाऽदृश्या तथा निम्ना नाभिः क्लेशावहा भवेत् ॥ ६८ ॥**

वर्तुला=वृत्ताकारा, विपुला=विस्तृता, अत्युच्चा=अत्यन्तोन्नता नाभिः यदि भवति तर्हि स नरेश्वरः=राजा भवति। अल्पा अदृश्या=स्वल्पा अदृग्गोचरा तथा निम्ना नाभिः क्लेशवहा भवेत्=कष्टान् संसूचयति ॥ ९८ ॥

आचार्य समुद्र कहते हैं कि—जिसकी गोल, बड़ी एवं ऊँची नाभि हो वह राजा होता है और छोटी तथा कम दिखाई पड़ने वाली नाभि क्लेशप्रद होती है ॥ ९८ ॥

**वलिमध्यगता या च सा शूलवधकारिणी।**
**वामावर्ता शाठ्यभावं धिषणां च प्रदक्षिणा ॥ ९९ ॥**

या नाभिः वलिमध्यगता=नाभिमध्ये वलिः भवति सा नाभिः शूलवधकारिणी=सा नाभिः नरस्य शूलेन=उदरशूलेन, वधं=मृत्युं कारयति। वामावर्ता नाभिः शाठ्यभावं=शठतां प्रकटयति। यस्य वामावर्ता नाभिर्भवति स शठो भवति। दक्षिणावर्ता नाभिः धिषणां=बुद्धिं प्रददाति ॥ ९९ ॥

जिसकी नाभि के मध्य में नाल के कटे हुए भाग की गाँठ होती है तो उसकी मृत्यु शूल द्वारा होती है। वामावर्त (बाँईं ओर को घूमी हुई) नाभि शठ पुरुषों की होती है और दक्षिणावर्त नाभि बुद्धिमान् पुरुषों की होती है ॥ ९९ ॥

**पार्श्वायता दीर्घजीवं धनयुक्ता तथोर्ध्वगा।**
**अधोगा बहुलं कुर्यान्नाभिर्भोगसमन्वितम् ॥ १०० ॥**

पार्श्वायता=पार्श्वभागे आयता=विस्तृता नाभिः नरं दीर्घजीविनम्=चिरायुषम् करोति। तथा ऊर्ध्वगा=ऊर्ध्वभागे विस्तृता चेत् तर्हि धनयुक्ता=बहुधनेन संयुक्ता नाभिः भवति। यदि अधोगा=अधोभागे विस्तृता तर्हि एतादृशी नाभिः (नरं) बहुलं=विपुलं, भोगसमन्वितम्=भोगसामग्रीसहितं कुर्यात् ॥ १०० ॥

पार्श्वभाग में चौड़ी नाभि वाला चिरकाल तक जीता है, ऊपर भाग में चौड़ी नाभि वाला धनी पुरुष होता है। अधोभाग में चौड़ी नाभिवाला बहुत भोगों से युक्त होता है ॥ १०० ॥

**पद्मस्य कर्णिकातुल्या नाभिः कुर्यान्नरेश्वरम् ॥ १०१ ॥**

पद्मस्य=कमलस्य, कर्णिका=कमलस्य मध्यस्थकर्णिकातुल्या कर्णिका इव नाभिः नरं नरेश्वरम्=पार्थिवम्, कुर्यात् करोति ॥ १०१ ॥

कमल के मध्य में स्थित कर्णिका के समान नाभि मनुष्य को राजा बनाती है ॥ १०१ ॥

वलीनां लक्षणम्

**शस्त्रान्तं स्त्रीभोगिनमाचार्यं बहुसुतं यथासंख्यम् ।**
**एक-द्वि-त्रि-चतुर्भिर्वलिभिर्विद्यान्नृपं त्ववलिम् ॥ १०२ ॥**

एका एव वलिः ( रेखा ) उदरे यस्य तस्य शस्त्रान्तम्=शस्त्रेण अन्तं मृत्युं विद्यात् । द्विवलियुक्तं नरं स्त्रीभोगिनम्=स्त्रीणां भोगिनं वदन्ति । त्रिवलियुक्तं आचार्यं=शास्त्रोपदेष्टारं जानीयाद् । चतुर्भिर्वलिभिः युक्तं बहुसुतम्=बहुपुत्रयुक्तं नरं विद्यात्=जानीयात् । अवलिम्=वलिरहितोदरं नरं च नृपं=मनुजेश्वरम्, विद्यात्=जानीयात् ॥ १०२ ॥

एक वलि ( रेखा ) वाले पुरुष की शस्त्र के द्वारा मृत्यु होती है। द्विबलि वाला स्त्रीभोगी होता है । तीन वलि वाला आचार्य ( उपदेशकर्ता ) होता है। चार वलि वाला बहुत पुत्रों वाला होता है। और जिसका उदर वलिरहित हो वह राजा होता है ॥ १०२ ॥

**विषमवलयो मनुष्याः भवन्त्यगम्याभिगामिनः पापाः ।**
**ऋजुवलयः सुखभाजः परदारद्वेषिणश्चैव ॥ १०३ ॥**

विषमवलयः-अनृजुवलिसहिताः मनुष्याः=नराः, अगम्याभिगामिनः-अगम्याभिः स्त्रीभिः सह सम्बन्धकर्तारः, पापाः=पापकर्मरताश्च भवन्ति । ऋजुवलयः=सरलरेखाश्च पुरुषाः सुखभाजः=सुखादीनां पात्राणि, तथा परदारद्वेषिणश्च भवन्ति=परस्त्रीभिः द्वेषं कुर्वन्ति ॥ १०३ ॥

टेढ़ी वलि ( रेखा ) वाले पुरुष अगम्या स्त्री के साथ गमन करने वाले होते हैं और परस्त्री से द्वेष रखते हैं ( अर्थात् अन्य स्त्री से किसी प्रकार का वैवाहिक सम्बन्ध नहीं रखते ) ॥ १०३ ॥

तथा च समुद्रः—

**एकवलिः शस्त्रमृत्युः स्त्रीभोगी द्विवलिः स्मृतः ।**
**त्रिभिराचार्य इत्याहुश्चतुर्भिः स्याद् बहुप्रजः ॥ १०४ ॥**

स्पष्टार्थः । ( १०२ श्लोके व्याख्या जाता ) ॥ १०४ ॥

इस श्लोक का हिन्दी अनुवाद पूर्व ( १०२ ) श्लोक के समान समझना चाहिये ॥ १०४ ॥

**अवलिस्तु नृपः प्रोक्तो यज्वा दानैकतत्परः ।**
**विषमा वलयो येषु ते नरा दुःखभागिनः ॥ १०५ ॥**

स्पष्टार्थः ॥ १०५ ॥

वलिरहित उदर वाला राजा होता है तथा यज्ञ-यागादिक और दान करने में तत्पर रहता है, विषम टेढ़ी कटी वलियों से युक्त मनुष्य दुःखी रहता है ॥ १०५ ॥

पार्श्वलक्षणम्

**मांसलमृदुभिः पार्श्वैः प्रदक्षिणावर्तरोमभिर्भूपाः ।**
**विपरीतैर्निर्द्रव्याः सुखपरिहीणाः परप्रेष्याः ॥ १०६ ॥**

सम्प्रति पार्श्वस्य लक्षणं उच्यते –मांसलमृदुभिः=समांसैः मृदुभिः पार्श्वैः, प्रदक्षिणावर्तरोमभिः–दक्षिणावर्तरोमयुक्तैः पार्श्वैः=कुक्षैश्च भूपाः=राजानो भवन्ति । विपरीतैः अमांसलैः=कठोरैः वामावर्तैः, पार्श्वैः निर्द्रव्याः=द्रव्यरहिताः, सुखपरिहीणाः, परप्रेष्या=अन्येन प्रेष्याः नरा भवन्ति ॥ १०६ ॥

अब पार्श्वभाग के लक्षण कहते हैं—मांस से युक्त कोमल और दक्षिणावर्त रोमों से युक्त पार्श्व ( कोंख ) वाले राजा होते हैं। और विपरीत=मांसरहित कठोर वामावर्त रोमों से युक्त पार्श्व वाले पुरुष सुखों से रहित तथा दूसरों के द्वारा नियुक्त होकर धावक का कर्म करने वाले होते हैं ॥ १०६ ॥

**कटेरुपरि चतुरंगुलो भागः पार्श्वशब्दवाच्यः ॥**

स्पष्टार्थः । अतो न व्याख्यायते ॥

कटि ( कमर ) से चार अंगुल ऊपर के भाग को "पार्श्व" कहते हैं ।

तथा च समुद्रः–

**मांसलैर्मृदुभिः पार्श्वैर्दक्षिणावर्तरोमभिः ।**
**नरा भूम्यधिपा ज्ञेया विपरीतैः सुदुःखिताः ॥ १०७ ॥**

स्पष्टार्थः ॥ ( १०६ श्लोकस्य व्याख्याऽवलोकनीया ॥ १०७ ॥ )

इसका अर्थ ऊपर (१०६) श्लोक की तरह समझें ॥ १०७ ॥

चूचुकलक्षणम्

**सुभगा भवन्त्यनुद्बद्ध-चूचुका निर्धना विषमदीर्घैः ।**
**पीनोपचितनिम्नैः क्षितिपतयः चूचुकैः सुखिनः ॥ १०८ ॥**

सम्प्रति चूचुकस्य–स्तनाग्रभागस्य लक्षणमाह—

येषां नराणां चूचुकौ=स्तनाग्रभागौ, श्यामायमानौ अनुदबद्धौ-उन्नतौ उभयतः समानौ, भवेताम् तर्हि सुभगौ=श्रेष्ठभाग्यस्य सूचकौ भवतः ।

विषमैः—न समैः विषमैः, दीर्घैः—लम्बायमानैः चूचुकैः क्षितिपतयः—राजानः सुखिनश्च भवन्ति ॥ १०८ ॥

अब चूचुक (स्तनों के अग्रभाग) के लक्षण कहते हैं—जिनके स्तनों के अग्रभाग ऊंचे और दोनों समान होते हैं वे श्रेष्ठ भाग्यवाले होते हैं। जिनके स्तनाग्र लम्बे और विषम ( एक छोटा एक बड़ा ) होते हैं वे निर्धन होते हैं। और जिनके चूचुक स्थूल, पुष्ट, मांस में निमग्न होते हैं वे राजा तथा सुखी होते हैं ॥ १०८ ॥

तथा च समुद्रः-

चूचुकैश्चाप्यनुद्बद्धैः सुभगाः सुखभागिनः।
निर्धना विषमैर्दीर्घैर्मग्नैर्मांसयुतैर्नृपाः ॥ १०९ ॥

स्पष्टार्थः ॥ ( १०८ श्लोके व्याख्या जाता ) ॥ १०९ ॥

जिनके स्तनों के अग्रभाग ऊंचे और दोनों समान होते हैं वे सुन्दर भाग्यवाले होते हैं। लम्बे चूचुक वाले एवं विषम चूचुक वाले निर्धन होते हैं। मांस में निमग्न चूचुक वाले राजा एवं सुखी होते है ॥ १०९ ॥

## हृदयलक्षणम्

हृदयं समुन्नतं पृथु न वेपनं मांसलं च नृपतीनाम्।
विपरीतमधमानां खर-रोम-चितसिरालं च ॥ ११० ॥

सम्प्रति हृदयदेशस्य लक्षणम् उच्यते—समुन्नतम्=साधुतया उन्नतं, पृथु-उच्चम्, न वेपनम्=न कम्पायमानम्, मांसलम्=मांसयुक्तम् हृदयं नृपतीनां भवति। विपरीतम्=उक्तलक्षणरहितं यथा—खरं=शुष्कं, रूक्षं मांसरहितम् रोमयुक्तं सिरालं=नाडिकासहितं च हृदयं अधमानाम्=धनरहितानां भवति ॥ ११० ॥

हृदय के लक्षण--समुन्नत=ऊँचा, पृथु=मोटा, अचल ( कम्परहित ) और मांस से युक्त हृदय-प्रदेश राजाओं का होता है। उक्त लक्षणों से विपरीत यथा—रूक्ष, मांसरहित, शुष्क, रोमों एवं उभरी हुई नाड़ियों से युक्त हृदयवाला व्यक्ति निर्धन होता है ॥ ११० ॥

तथा च समुद्रः—

अचलं पृथुमुच्चं च नृपाणां हृदयं स्मृतम्।
विपरीतं सिरालं च रोमशं दुःखभागिनम् ॥ १११ ॥

अचलं—स्थिरम्, पृथु—स्थुलम्, उच्चं—दीर्घम्, हृदयं नृपाणां—नरपतीनां स्मृतम्—आचार्यसमुद्रेण उक्तम्। विपरीतम्—उक्तलक्षणेन भिन्नलक्षणम् यथा—

सिरालं-शिरायुक्तं रोमशं-रोमयुक्तम् हृदयं दुःखभागिनाम्-दुःखभोक्तृणामेव भवति ॥ १११ ॥

स्थिर स्थूल और उच्च हृदय वाला व्यक्ति राजा होता है। विपरीत हृदय अर्थात् नाड़ियों एवं रोमों से युक्त हृदय वाला व्यक्ति दुःखभागी होता है ॥ १११ ॥

वक्षोलक्षणम्

**समवक्षसोऽर्थवन्तः पीनैः शूरा ह्यकिंचनास्तनुभिः ।**
**विषमं वक्षो येषां ते निःस्वाः शस्त्रनिधनाश्च ॥ ११२ ॥**

सम्प्रति वक्षःस्थलस्य लक्षणमाह—येषां वक्षःस्थलं समं भवति ते अर्थवन्तः-धनवन्तो भवन्ति, पीनैः-स्थूलैः पुष्टवक्षःस्थलैः, शूराः-पराक्रमिणो भवन्ति। तनुभिः=कृशैः-लघुवक्षःस्थलैः अकिञ्चनाः-निर्धना भवन्ति। तथा शस्त्रनिधनाश्च-शस्त्रेण मृत्युं प्राप्नुवन्ति ॥ ११२ ॥

अब वक्षःस्थल के लक्षण कहते हैं—जिन मनुष्यों के वक्षःस्थल समान होते हैं वे धनी होते हैं। स्थूल एवं पुष्ट वक्षःस्थल वाले शूरवीर होते हैं, और छोटे वक्षःस्थल वाले धनहीन होते हैं। जिनका वक्षःस्थल विषम अर्थात् ऊँचा-नीचा होता है वे निर्धन होते हैं और शस्त्र से मृत्यु को प्राप्त होते हैं ॥ ११२ ॥

तथा च समुद्रः—

**अर्थवान् समवक्षाः स्यात् पीनैः शूरा धनान्विताः ।**
**अल्पैश्च विकला दीना विषमाः शस्त्रमृत्यवः ॥ ११३ ॥**

समुद्राचार्यः कथयति—

समवक्षःस्थलः नरः अर्थवान्-धनवान् भवति। पीनैः-स्थूलैः पुष्टैः वक्षःस्थलैः शूराः-पराक्रमिणः धनान्विताश्च-धनधान्ययुक्ताश्च भवन्ति। अल्पैश्च-ह्रस्वैश्च वक्षःस्थलैः नराः विकलाः-व्याकुलाः दीनाश्च-समस्तसुखसाधनैश्च हीना भवन्ति। विषमाः-उच्चनीचेन वक्षःस्थलेन नराः शस्त्रेण मृत्युं प्राप्नुवन्ति ॥ ११३ ॥

आचार्य समुद्र कहते हैं—समान वक्षःस्थल वाला पुरुष धनी होता है। स्थूल और पुष्ट वक्षःस्थल वाला पुरुष शूरवीर और धनी होता है। छोटे वक्षःस्थलवाले पुरुष व्याकुल और दीनहीन होते हैं। विषम=ऊँचे नीचे वक्षःस्थल वाले पुरुष शस्त्र द्वारा मृत्यु को प्राप्त होते हैं ॥ ११३ ॥

### जत्रुलक्षणम्

**विषमैर्विषमो जत्रुभिरर्थविहीनोऽस्थिसन्धिपरिणद्धैः ।**
**उन्नतजत्रुर्भोगी निम्नैर्निःस्वोऽर्थवान् पीनैः ॥ ११४ ॥**

सम्प्रति जत्रोः लक्षणं कथ्यते--(यस्य पुरुषस्य) जत्रुः=स्कन्धयोः सन्धिस्थानम्, विषमम्=असरलं तस्य नरस्य विषमः=असरलस्वभावो भवति (अर्थात् कठोरस्वभावयुक्तो भवति )। यस्य जत्रु अस्थिसन्धिपरिणद्धम्=सन्धियुक्तं स धनरहितो भवति । यस्य च जत्रु उन्नतं भवति स भोगी भवति । भिन्नैः जत्रुभिः नरः निःस्वः=धनरहितो भवति । पीनैः=स्थूलैः, जत्रुभिर्युक्तो नरः अर्थवान्=धनवान् भवति ॥ ११४ ॥

अब जत्रु के लक्षण कहते हैं—

जिस मनुष्य की जत्रु (हँसुली) विषम (टेढ़ी) होती है वह कठिन स्वभाववाला होता है। और जिसकी जत्रु सन्धियुक्त हो वह धनहीन होता है। जिसकी जत्रु ऊँची हो वह भोगी होता है। जिसकी जत्रु नीची हो वह निर्धन होता है। और जिसकी जत्रु मोटी एवं पुष्ट हो वह धनी होता है ॥ ११४ ॥

तथा च समुद्रः—

**जत्रुभिर्विषमैः क्रूरा दरिद्राः क्रूरसन्धिभिः ।**
**भोगी चोन्नतजत्रुः स्यान्निम्नैर्निस्वोऽन्यथा धनी ॥ ११५ ॥**

कथितलक्षणं समुद्रोऽपि समर्थयति—विषमैः=साम्याभावयुक्तैः जत्रुभिः=कण्ठ-अंसयोर्मध्ये यदस्थि तैः जत्रुभिः मनुष्याः क्रूराः=कठोरहृदया भवन्ति । क्रूरसन्धिभिः-कठोरजत्रुभिर्मानवाः दरिद्राः-निर्धना भवन्ति । उन्नतजत्रुः=उच्चजत्रुयुक्तो नरो भोगी भवति । निम्नैः=नीचैः जत्रुभिः, निःस्वः=धनरहितो भवति । अन्यथा=पुष्टजत्रुयुक्तो नरो धनी भवति ॥ ११५ ॥

आचार्य समुद्र भी कहते हैं कि—विषम जत्रुओं वाला पुरुष कठोर हृदय वाला होता है। कठोर जत्रुओं वाला दरिद्र होता है। ऊँची जत्रुओं वाला भोगी होता है। नीची जत्रुओं वाला निर्धन होता है। और पुष्ट जत्रु वाला धनी होता है ॥ ११५ ॥

### ग्रीवा-पृष्ठलक्षणम्

**चिपिटग्रीवो निःस्वः शुष्का सशिरा च यस्य वा ग्रीवा ।**
**महिषग्रीवः शूरः शस्त्रान्तो वृषसमग्रीवः ॥ ११६ ॥**

सम्प्रति ग्रीवापृष्ठयोर्लक्षणमाह—चिपिटग्रीवः-चिपिटा ग्रीवा यस्य सः, यस्य वर्तुलाकारग्रीवा न भवति स निःस्वः-धनरहितो भवति । यस्य शुष्का ग्रीवा सशिरा=नाडिकायुक्ता सोऽपि निर्धनो भवति । महिषग्रीवः-महिषवत्

ग्रीवायुक्तः शूरः-पराक्रमशाली भवति। वृष-समा ग्रीवा यस्य स नरः शस्त्रान्तः-शस्त्रेण अन्तो यस्य स भवति। शस्त्रेण मृत्युं प्राप्नोतीत्यर्थः ॥११६॥

अब ग्रीवा=गर्दन, और पृष्ठ के लक्षण कहते हैं—चिपटी गर्दन वाला तथा शुष्क और नाड़ियों से युक्त ग्रीवा वाला निर्धन होता है। महिष (भैंसे) के समान ग्रीवा वाला शूरवीर होता है। वृष (बैल) के समान ग्रीवा वाला शस्त्र द्वारा मृत्यु को प्राप्त होता है ॥ ११६ ॥

**कम्बुग्रीवो राजा प्रलम्बकण्ठः प्रभक्षणो भवति।**
**पृष्ठमभग्नमरोमशमर्थवतामशुभदमतोऽन्यत् ॥ ११७ ॥**

कम्बुग्रीवः-शंखग्रीवः नरो राजा भवति। प्रलम्बकण्ठः=लम्बायमान-कण्ठः=दीर्घकण्ठः, प्रभक्षणः-अधिकभोजनकर्ता भवति। अभग्नः, अरोमशः=रोमरहितः पृष्ठभागः अर्थवताम्=धनयुक्तानां भवति। अतः=उक्तप्रकारात् भिन्नं पृष्ठं अशुभदम्=अकल्याणकरं भवति ॥ ११७ ॥

शङ्ख के समान गर्दन वाला पुरुष राजा होता है, लम्बे कण्ठवाला व्यक्ति अधिक भोजन करने वाला होता है। जिसका पीछे का भाग अभग्न और रोमरहित हो वह अर्थवान् होता है। उक्त लक्षण से भिन्न प्रकार के पृष्ठ वाला पुरुष अशुभों का भोगी होता है ॥ ११७ ॥

तथा च समुद्रः—

**ग्रीवा च वर्तुला यस्य स नरो धनवान् स्मृतः।**
**कम्बुग्रीवा नरा ये तु राजानस्ते न संशयः ॥ ११८ ॥**

पूर्वश्लोकेन प्रतिपादितं लक्षणं समर्थयन् समुद्राचार्यः कथयति—यस्य=मानवस्य ग्रीवा=कण्ठः वर्तुला=वृत्ताकारा भवति स नरः धनवान्-धनयुक्तः स्मृतः-कथितः। ये नराः कम्बुग्रीवाः=शंखोपमकण्ठयुक्ताः भवन्ति ते राजानः=पृथ्वीपालकाः भवन्ति, अस्मिन् विषये न संशयः=संशयस्य लेश-मात्रमपि नास्ति ॥ ११८ ॥

पूर्वश्लोक द्वारा प्रतिपादित कण्ठ के लक्षणों की पुष्टि करते हुए आचार्य समुद्र कहते हैं—जिस पुरुष की ग्रीवा गोल होती है वह धनवान् होता है। जिन पुरुषों की ग्रीवा शंख के समान होती है वे निःसंशय राजा होते हैं ॥ ११८ ॥

**दीर्घग्रीवा नरा ये तु तेऽपि दुःखस्य भागिनः।**
**वकग्रीवा नरा ये ते दाम्भिकाः पिशुनास्तथा ॥ ११९ ॥**

ये नरा दीर्घग्रीवाः=लम्बायमानग्रीवायुक्तास्ते, दुःखस्य=नानाप्रकारेण कष्टादीनां भागिनः भवन्ति। ये च नराः वकग्रीवाः=वको नाम पक्षि-

विशेषतस्तस्य ग्रीवेव, अतिलम्बायमानग्रीवायुक्ताः, ते दाम्भिकाः=पाषण्डयुक्ताः, पिशुनाश्च=परोक्षे निन्दका भवन्ति ॥ ११९ ॥

जिन पुरुषों की लम्बी ग्रीवा ( गर्दन ) होती है वे दुःखी होते हैं। और जिनकी ग्रीवा बगुले के समान होती है, वे दम्भी एवं पिशुन ( चुगली करने वाले ) होते हैं ॥ ११९ ॥

**निःस्वस्तु चिपटग्रीवः शुष्कग्रीवस्तथैव च।**
**शूरस्तु महिषग्रीवः शस्त्रान्तो वृषकन्धरः ॥ १२० ॥**

विपटग्रीवः=अवर्तुलग्रीवः, तथैव शुष्कग्रीवो निःस्वः=धनरहितो भवति। महिषग्रीवश्च शूरः=पराक्रमयुक्तो भवति। वृषकन्धरः=वृषस्य कन्धरा=ग्रीवा इव कन्धरा यस्य सः नराः शस्त्रान्तो भवति=शस्त्रेण तस्य मृत्युर्भवति ॥ १२० ॥

चिपटी और शुष्क ग्रीवा वाला निर्धन होता है। महिष ( भैंसे ) के समान ग्रीवा वाला शूरवीर होता है। बैल के समान ग्रीवा वाले व्यक्ति का अन्त शस्त्र द्वारा होता है ॥ १२० ॥

तथा च समुद्रः--

**सस्निग्धं मांसलं पृष्ठमभग्नं चाथ रोमशम्।**
**सधनानां विपर्यस्तं निर्धनानां प्रकीर्तितम् ॥ १२१ ॥**

पूर्वप्रतिपादितं विषयं पोषयन् समुद्रः कथयति—अस्निग्धम्=चिक्कणं मांसलम्=मांसयुक्तं अभग्नं=पृष्ठम्=पृष्ठभागः, अथ रोमशम्=तथा रोमसंहितम् पृष्ठं सधनानां=धनयुक्तानां भवति। उक्तलक्षणरहितानां पृष्ठं तु निर्धनानां विपर्यस्तम्=विपरीतम्, प्रकीर्तितम्=कथितम् ॥ १२१ ॥

पूर्व कहे हुए लक्षणों की पुष्टि करते हुए आचार्य समुद्र भी कहते हैं कि जिनकी पीठ चिकनी, मांस से युक्त, अभग्न तथा रोमयुक्त हो वे धनी होते हैं। इनसे विपरीत रूखी, निर्मांस, सभग्न और रोमरहित होती है वे निर्धन होते हैं ॥ १२१ ॥

### कक्षालक्षणम्

**अस्वेदन-पीनोन्नत-सुगन्धि-सम-रोम-संकुलाः कक्षाः[1]।**
**विज्ञातव्या धनिनामतोऽन्यथाऽर्थैर्विहीनानाम् ॥ १२२ ॥**

सम्प्रति कक्षाया लक्षणानि आह-येषां कक्षायाम्=बाहुमूले स्वेदो न भवति अथ च पीनोन्नताः=पुष्टा एवं उन्नताः सुगन्धियुक्ताः=श्रेष्ठगन्धयुक्ताः सम-

---

१. बाहुमूलतलं 'कक्षा' शब्देन उच्यते। ( बाहों के मूल स्थान को 'कक्षा' कहते हैं )।

रोमसंकुलाः=समानरोमावलीभिः व्याप्ताः कक्षाः धनिनां भवन्ति। अतः अन्यथा=उक्तलक्षणेन भिन्नलक्षणयुक्ताः कक्षा अर्थैः=द्रव्यैः विहीनानाम्=रहितानां भवति ॥ १२२ ॥

अब कक्षा के लक्षण कहते हैं–जिनकी कक्षा (कोंख) पसीने से रहित, पुष्ट, ऊँची, श्रेष्ठ सुगन्धवाली और समान रोमों वाली होती है वे धनी होते हैं। इन लक्षणों से विपरीत लक्षणवाली कक्षा ( कखौरी, बगल ) निर्धनों की होती है ॥१२२॥

तथा च समुद्रः=

निःस्वेद-मांसलाः कक्षाः रोमसंकुलाः।
धनिनां तु विजानीयान्निर्धनानामतोऽन्यथा ॥ १२३ ॥

स्पष्टार्थोऽयं श्लोकः, अतो न व्याख्यायते ॥ १२३ ॥

इसका अर्थ स्पष्ट है, अतः व्याख्या नहीं की जा रही है ॥ १२३ ॥

अंसलक्षणम्

निर्मांसौ रोमचितौ भग्नावल्पौ च निर्धनस्यांसौ।
विपुलावप्युच्छिन्नौ सुश्लिष्टौ सौख्यवीर्यवताम् ॥ १२४ ॥

अधुना अंसस्य=स्कन्धस्य लक्षणमुच्यते---निर्मांसौ=मांसरहितौ रोमचितौ=बहुरोमयुक्तौ भग्नौ=त्रुटितौ अल्पौ=लघू अंसौ निर्धनानामेव भवन्ति। विपुलौ=विस्तृतौ=विस्तारयुक्तौ अव्युच्छिन्नौ सुश्लिष्टौ=भुजाभ्यां मिलितौ अंसौ सौख्यवीर्यवताम् पुरुषाणां सुखयुक्तानां वीर्यवतां=पराक्रमयुक्तानां भवन्ति ॥ १२४ ॥

अंस=स्कन्धों के लक्षण कहते हैं—मांसरहित, रोमों से युक्त, भग्न, छोटे कन्धे निर्धन पुरुषों के होते हैं। बड़े विस्तारयुक्त और भुजों से मिले हुये, पुष्ट स्कन्ध सुखी एवं पराक्रमी पुरुषों के होते हैं ॥ १२४ ॥

तथा च समुद्रः—

कदलीतम्भसंकाशा अजस्कन्धाश्च ये नराः।
राजानस्ते हि विज्ञेया महाकोशा महाबलाः ॥ १२५ ॥

पुनः पूर्वश्लोकं पुष्टयन् समुद्रः कथयति—कदलीस्तम्भसंकाशाः=कदलीस्तम्भ इव स्कन्धौ येषान्ते तथा अजस्कन्धाः=ये नरा भवन्ति ते राजान एव महाकोशाः बहुधनयुक्ताः महाबलाः=अतिपराक्रमिणश्च भवन्ति ॥ १२५ ॥

आचार्य समुद्र समर्थन करते हैं–केले के खम्भे के समान एवं बकरी के स्कन्ध के समान कन्धों वाले पुरुष बहुत धनी और महाबलवान् राजा होते हैं ॥ १२५ ॥

**निर्मांसरोमबहुला निर्धनस्य प्रकीर्तिताः ॥**

निर्मांसरोमबहुला=मांसरहिताः अधिक-रोमयुक्ताश्च स्कन्धाः निर्धनस्य=धनरहितस्य प्रकीर्तिताः=कथिताः।

मांसरहित और बहुत रोमों से युक्त स्कन्ध (कन्धे) निर्धनों के होते हैं।

बाहुलक्षणम्

**करिकरसदृशौ वृत्तावाजानुलम्बिनौ समौ पीनौ।**
**बाहू पृथिवीशानामधनानां रोमशौ ह्रस्वौ ॥ १२६ ॥**

अथ=स्कन्धलक्षण-कथनानन्तरं बाहुलक्षणानि उच्यन्ते—करिकरसदृशौ=हस्तिशुण्डोपमौ पुष्टौ वृत्तौ=वर्तुलौ आजानुलम्बिनौ=जानुपर्यन्तलम्बायमानौ समौ=समानौ, पीनौ=स्थूलौ बाहू पृथिवीशानाम्=पृथिव्याः ईशाः=स्वामिनः तेषां भवतः, रोमशौ=रोमयुक्तौ ह्रस्वौ बाहू अधनानां भवतः ॥१२६॥

स्कन्धों के लक्षण कहने के बाद बाहुओं के लक्षण बताते हैं---हाथी की सूँड़ समान पुष्ट गोल एवं जानुओं को छूने वाली लम्बी समान और स्थूल बाहु राजाओं की होती हैं, और रोमों से युक्त और छोटी बाहु निर्धनों की होती हैं॥ १२६ ॥

तथा च समुद्रः—

**उद्बद्धबाहुः पुरुषो वधबन्धमवाप्नुयात्।**
**दीर्घबाहुर्भवेद्राजा समुद्रवचनं यथा ॥ १२७ ॥**

समुद्राचार्यः कथयति—

उद्बद्धबाहुः=बन्धनयुक्तबाहुः लघुबाहुयुक्तः पुरुषो वधम्=अकाले मृत्युं प्राप्नोति तथा बन्धम्=कारागृहम् अवाप्नुयात्=प्राप्नुयात्। दीर्घबाहुः=लम्बायमानबाहुयुक्तः पुरुषो राजा=पृथ्वीपतिः भवति, यथा=अनेन प्रकारेण समुद्राचार्यस्य वचनं वर्तते ॥ १२७ ॥

बधी हुई (छोटी) बाहों वाला पुरुष वध और बन्धन (जेल इत्यादि) को प्राप्त होता है, लम्बी बाहुओं वाला व्यक्ति राजा होता है—ऐसा समुद्राचार्य कहते हैं॥ १२७ ॥

**प्रलम्बबाहुरैश्वर्यं प्राप्नुयाद् गुणसंयुतम्।**
**ह्रस्वबाहुर्भवेद् दासः परप्रेषकरस्तथा ॥ १२८ ॥**

प्रलम्बबाहुः=अत्यन्तदीर्घबाहुः पुरुषः गुणसंयुतम्=विविधगुणैर्युक्तम्, ऐश्वर्यम्=समस्तसुखसाधनं प्राप्नुयात्। ह्रस्वबाहुः=लघुबाहुः पुरुषः परप्रेषकरः=अन्येन प्रेषितः धावको दासः=दास्यकर्मकरो भवति ॥ १२८ ॥

लम्बी भुजाओं वाला पुरुष समस्त गुणों एवं समस्त ऐश्वर्य से सम्पन्न होता है। ह्रस्व बाहु वाला पुरुष दास एवं प्रेष्य ( संदेशवाहक ) दूत होता है ॥ १२८ ॥

**वामावर्तभुजा ये तु ये च दीर्घभुजा नराः।**
**समानबाहवो ये तु राजानस्ते प्रकीर्तिताः ॥ १२९ ॥**

ये वामावर्तभुजाः ये च दीर्घभुजाः=प्रलम्बबाहुयुक्ताः, समानबाहवः=उभावपि समानौ बाहू=भुजौ येषां ते नराः=पुरुषाः राजान=भूपाः प्रकीर्तिताः= कथिताः ॥ १२९ ॥

वामावर्त ( बाईं ओर को घूमी हुई ) भुजा वाले, लम्बी भुजा वाले या समान भुजा वाले पुरुष राजा होते हैं ॥ १२९ ॥

इदानीं हस्तलक्षणमाह—

**हस्तांगुलयो दीर्घाश्चिरायुषामवलिताश्च सुभगानाम्।**
**मेधाविनां च सूक्ष्माश्चिपिटाः परकर्मनिरतानाम् ॥ १३० ॥**

इदानीं=सम्प्रति हस्तलक्षणम्=हस्तस्य=करस्य लक्षणम् आह=उच्यते—हस्ताङ्गुलयः=हस्तस्य=करस्य अङ्गुलयः दीर्घाः=लम्बायमानाः चिरायुषाम्=दीर्घजीविनां भवन्ति। अवलिताः=न वलिताः अवलिताः वलिना ( हिन्दीभाषायां झुर्री इति ) रहिताः हस्ताङ्गुलयः सुभगानाम्=श्रेष्ठभाग्यवतां भवन्ति। सूक्ष्माः=कृशाङ्गुलयो मेधाविनां=बुद्धिमतां भवन्ति। चिपिटाः अगुलयः परकर्मनिरतानां=परसेवानिरतानां भवन्ति ॥ १३० ॥

अब हाथ के लक्षण कहते हैं—हाथ की लम्बी अंगुलियां दीर्घजीवियों की होती हैं। झुर्रियों से रहित अंगुलियाँ श्रेष्ठ भाग्यशाली पुरुषों की होती हैं, सूक्ष्म (पतली) अंगुलियाँ बुद्धिमान् व्यक्तियों की होती हैं, और दूसरों की सेवा करके जीविका अर्जित करने वालों की अंगुलियाँ चिपटी होती हैं ॥ १३० ॥

**स्थूलाभिर्धनरहिता बहिर्नताभिश्च शस्त्रनिर्याणाः।**
**कपिसदृशकरा धनिनो व्याघ्रोपमपाणयः पापाः ॥ १३१ ॥**

स्थूलाभिः=पृथुकायाङ्गुलीभिः धनरहिताः=द्रव्येण हीनाः, बहिर्नताभिः=पार्श्वभाग नताभिः अंगुलीभिः शस्त्रनिर्याणाः=शस्त्रेण आयुधेन निर्याणं=मृत्युः येषान्ते नरा भवन्ति। कपिसदृशकराः=कपिसमानहस्तयुक्ताः पुरुषाः, धनिनः=द्रव्ययुक्ता भवन्ति, व्याघ्रोपमपाणयः=व्याघ्रतुल्यपाणियुक्ताः नराः पापाः=पापकर्मणि रतां भवन्ति ॥ १३१ ॥

मोटी अंगुलियों वाले पुरुष धनरहित होते हैं, बाहर की ओर को लची ( घूमी ) हुई अंगुलियों वाले शस्त्र के द्वारा मृत्यु को प्राप्त होते हैं। बन्दर के समान हाथ

वाले धनी होते हैं और व्याघ्र (चीता) के समान हाथ वाले पाप कर्म करने वाले पुरुष होते हैं ॥ १३१ ॥

मणिबन्धलक्षणम्

अन्यदप्याह—

**मणिबन्धनैर्निगूढैर्दृढैश्च सुश्लिष्टसन्धिभिर्भूपाः ।**
**हीनैर्हस्तच्छेदाः श्लथैः सशब्दैश्च निर्द्रव्याः ॥ १३२ ॥**

निगूढैः=मांसेन गोपितैः मणिबन्धनैः=हस्तबाह्वोर्मध्यभागः मणिबन्धः, तैः दृढैः—पुष्टैः, सुश्लिष्टसन्धिभिः—शोभनसन्धियुक्तैः मणिबन्धैः, भूपाः—राजानो भवन्ति, न तु साधारणाः पुरुषाः भवन्ति। उक्तलक्षणेन हीने सति हस्तच्छेदाः=हीनलक्षणानां हस्तानां अपरेण पुरुषेण छेदनं भवति, श्लथैः=अदृढैः, सशब्दैः=शब्दसहितैः मणिबन्धैः पुरुषाः, निर्द्रव्याः द्रव्यरहिताः भवन्ति ॥ १३२ ॥

गूढ़ दृढ ( मजबूती ) और सुन्दर सन्धि से युक्त मणिबन्धवाले पुरुष राजा होते हैं। उक्त लक्षणों से रहित मणिबन्धवाले पुरुषों के हाथ दूसरों के द्वारा शस्त्र से काटे जाते हैं। ढीले और शब्दयुक्त मणिबन्धवाले धनहीन होते हैं ॥ १३२ ॥

अन्यदप्याह—

**पितृवित्तेन विहीना भवन्ति निम्नेन करतलेन नराः ।**
**संवृत्तनिम्नैर्धनिनः प्रोत्तानकराश्च दातारः ॥ १३३ ॥**

निम्नेन करतलेन=हस्तस्य मध्यभागेन यदि स उन्नतो नास्ति—तेन नराः=पुरुषाः पितृवित्तेन=पितुः धनेन विहीनाः=रहिता भवन्ति। संवृत्तनिम्नैः—समस्तकरतलनिम्नैः सद्भिः धनिनः—धनयुक्ताः पुरुषा भवन्ति, प्रोत्तानकराः—सोद्घाटितकरतलाश्च दातारः—दानशीला भवन्ति ॥ १३३ ॥

नीची हथेली वाले पितृधन से वंचित रहते हैं। सम्पूर्ण करतल यदि अंगुलियों की ओर झुका हो तो वे धनी होते हैं तथा उत्तान हथेली वाले पुरुष होते हैं ॥ १३३ ॥

**तुषसदृशनखाः क्लीबाश्चिपटैः स्फुटितैश्च वित्तसंत्यक्ताः ।**
**कुनखविवर्णैः परतर्ककाश्च ताम्रैश्च भूपतयः ॥ १३४ ॥**

पुनरपि हस्तलक्षणमुच्यते—तुषसदृशनखाः=शालिधान्यस्योपरिस्थिततुषवत् नखाः येषां ते क्लीबाः=नपुंसकाः भवन्ति। स्फुटितैः=त्रुटितैश्च नखैश्च वित्तसंत्यक्ताः—वित्तेन धनेन सन्त्यक्ता रहिताः=भवन्ति। कुनख-

विवर्णैः—कुत्सितनखाः—कुनखाः, विवर्णैः—मलिनैः, नखैः युक्ताः पुरुषाः परतर्ककाः—अपरेषां विचारेषु व्यर्थमेव तर्ककर्तारो भवन्ति। ताम्रैश्च=ताम्रधातुसदृशैः नखैर्युक्ताः पुरुषा भूपतयः=राजानो भवन्ति ॥ १३४ ॥

धान के ऊपर के छिलके को 'तुष' कहते हैं। उस तुष के समान रंगयुक्त नख वाले नपुंसक होते हैं। त्रुटित नखों वाले धन से रहित होते हैं, खराब एवं मलिन नखों वाले दूसरे के साथ कुतर्क करने वाले होते हैं। तांबे के समान लाल रंगवाले नखों से युक्त राजा होते हैं ॥ १३४ ॥

अन्यदप्याह—

**अंगुष्ठयवैराढ्याः सुतवन्तोऽगुष्ठमूलजैश्च यवैः ।**
**दीर्घांगुलिपर्वाणः सुभगा दीर्घायुषश्चैव ॥ १३५ ॥**

पुनरपि आह—अंगुष्ठयवैः=अंगुष्ठेषु यवाकारचिह्नैः नरा आढ्याः=धनयुक्ताः भवन्ति, अंगुष्ठमूलजैः अंगुष्ठस्य मूले यवाकारचिह्नैः सुतवन्तः—पुत्रयुक्ता भवन्ति। दीर्घांगुलिपर्वाणः—अंगुलिमध्ये दीर्घपर्वयुक्ताः पुरुषाः शुभाः—शोभनभाग्ययुक्ताः ( सौभाग्यशालिनः ) भवन्ति। तथा दीर्घायुषश्च—चिरजीविनो भवन्ति ॥ १३५ ॥

ऐसे पुरुष जिनके अंगूठे में यव ( जौ ) का चिह्न हो, धनी, अंगूठे के मूल भाग में यव होने से पुत्रों से युक्त, अंगुलियों के पर्व बड़े होने से सौभाग्यशाली और दीर्घजीवी होते हैं ॥ १३५ ॥

अन्यदप्याह—

**स्निग्धा निम्ना रेखा धनिनां तद्व्यत्ययेन निःस्वानाम् ।**
**विरलांगुलयो निःस्वा धनसञ्चयिनो घनांगुलयः ॥ १३६ ॥**

पुनरप्याह—धनिनां=धनयुक्तानाम्, स्निग्धाः—चिक्कणयुक्ता निम्नाः—गर्तयुक्ता रेखाः—हस्तरेखा भवन्ति। तद्व्यत्ययेन—तद्वैपरीत्येन निःस्वानाम्—धनरहितानाम्, अस्निग्धा अनिम्ना रेखा भवन्ति। विरलांगुलयः=छिद्रयुक्तांगुलयः, निःस्वाः—धनरहिताः, घनाङ्गुलयः—परस्परसंश्लिष्टाङ्गुलयश्च पुरुषाः धनसञ्चयिनः=धनैकत्रीकरणपटवो भवन्ति ॥ १३६ ॥

पुनः कहते हैं—स्निग्ध गहरी रेखाएँ धनियों की तथा रूखी एवं अस्पष्ट रेखाएँ निर्धनों की होती हैं, छिद्रयुक्त अंगुलियां निर्धनों की परस्पर मिली हुई अंगुलियां धन-सञ्चय करने वालों की होती हैं ॥ १३६ ॥

अन्यदप्याह—

**तिस्रो रेखा मणिबन्धनोत्थिताः करतलोपगा नृपतेः ।**
**मीनयुगाङ्कितपाणिर्नित्यं सत्रप्रदो भवति ॥ १३७ ॥**

मणिबन्धनोत्थिताः—मणिबन्धनात् उद्भूताः, तिस्रो रेखाः करतलोपगाः—करतलस्य समीपे गताः, नृपतेः—भूपतेर्भवन्ति, न तु अन्यस्य। मीनयुगाङ्कितपाणिः—मीनयुगेन अङ्कितः पाणिः यस्य सः, यस्य हस्ते युगलमत्स्यचिह्नं भवति स पुरुषः नित्यं = प्रतिदिनं सत्रप्रदः—लाभान्वितो भवति ॥ १३७ ॥

जिसके मणिबन्ध से निर्गत तीन रेखायें हथेली के ऊपरी भाग तक गयी हुई हों वह निश्चय ही राजा होता है। दो मछली के चिह्नों से युक्त हाथ वाला पुरुष नित्य प्रति लाभान्वित होता है ॥ १३७ ॥

वज्राकारा धनिनां विद्याभाजां च मीनपुच्छनिभाः।
शङ्खातपत्रशिविकागजाश्वपद्मोपमा नृपतेः ॥ १३८ ॥

धनिनाम्—धनयुक्तानाम् हस्ते, वज्राकारा = वज्रसमानाकरा रेखा भवति। विद्याभाजाम्—विदुषां हस्ते मीनपुच्छनिभा मत्स्यस्य पुच्छवत् रेखा भवति। शंख इव, आतपत्रं = छत्रमिव, शिविकेव, गज इव—हस्तीव, अश्व इव, पद्ममिव रेखा येषां करेषु भवन्ति ते राजानो भवन्ति ॥ १३८ ॥

धनियों के हाथ में वज्र के समान रेखा, विद्वानों के हाथ में मछली की पूँछ के समान रेखा, शंख, छत्र, शिविका, पालकी, हाथी, अश्व (घोड़ा) और पद्म (कमल) के समान रेखाएँ राजाओं के हाथों में होती हैं ॥ १३८ ॥

कलशमृणालपताकाङ्कुशोपमाभिर्भवन्ति निधिपालाः।
दामनिभाभिश्चाढ्याः स्वस्तिकरूपाभिरैश्वर्यम् ॥ १३९ ॥

कलशः = कुम्भः, मृणालं—कमलनालं, पताका = ध्वजः, अंकुशः—गजताडनायुधम् तासामुपमा = सादृश्यं यासु ताभिः आकृतिभिः पुरुषाः निधिपालाः = निधीनां पालाः, रक्षकाः, कोषाध्यक्षाः—अत्यन्तं धनिका भवन्ति। दामनिभाभिः मालोपमरेखाभिः आढ्या धनिका भवन्ति। स्वस्तिकरूपाभिः—प्रचलितस्वस्तिकचिह्नैः, ऐश्वर्यम्—समस्तसुखसाधनं प्राप्यते ॥ १३९ ॥

कलश, कमल-नाल, ध्वजा, अंकुश आदि के समान रेखा वाले हाथ निधिपालकों (खजांचियों) के, माला के समान रेखा युक्त हाथ धनियों के, तथा स्वस्तिक चिह्न वाले हाथ ऐश्वर्य वालों के होते हैं ॥ १३९ ॥

चक्रासिपरशुतोमरशक्तिधनुःकुन्तसन्निभा रेखाः।
कुर्वन्ति चमूनाथं यज्वानं मूसलोलूखलाकाराः ॥ १४० ॥

चक्रम्—असिः, खड्गः—परशुः, तोमरम्—शक्तिः; धनुः—कुन्तलं तत् सन्निभा—तत्समाना रेखाः पुरुषं चमूनाथम्—सेनायाः स्वामिनं कुर्वन्ति।

मूसल इव, उलूखलमिव रेखा यस्य हस्ते भवति तं पुरुषं यज्वानं=यज्ञकर्तारं ता रेखाः कुर्वन्ति ॥ १४० ॥

जिसके हाथ में चक्र, तलवार, परशु (फरसा), तोमर, शक्ति (बरछा) धनुष, कुन्त, बरछा के समान रेखाएं हों वे उसे सेनानायक बनाती हैं। मूसल और उलूखल के समान रेखायें यज्ञ करने वाला बनाती हैं ॥ १४० ॥

**मकर-ध्वज-कोष्ठागारसन्निभाभिर्महाधनोपेताः ।**
**वेदीनिभेन चैवाग्निहोत्रिणो ब्रह्मतीर्थेन ॥ १४१ ॥**

मकर-ध्वज-कोष्ठागारसन्निभाभिः=मकरेण ध्वजेन कोष्ठागारेण च समानाभी रेखाभिः महाधनोपेताः=अत्यन्तं धनिनो भवन्ति। वेदीनिभेन=वेदीतुल्येन ब्रह्मतीर्थेन=अंगुष्ठमूलेन ( अंगुष्ठमूलं ब्रह्मतीर्थेन व्यपदिश्यते ) तत्र वेदी इव येषां भवेत् तर्हि ते अग्निहोत्रिणो भवन्ति। अग्निहोत्रं प्रतिदिनं कुर्वन्ति ॥ १४१ ॥

मकर, ध्वजा, और कोष्ठागार (घर) के समान रेखाएं महान् धनी बनाती हैं, जिसके अंगूठे के मूल में वेदी के समान रेखा है वह व्यक्ति अग्निहोत्र करने वाला होता है। (अंगुष्ठ का मूलभाग 'ब्रह्मतीर्थ' कहा गया है) ॥ १४१ ॥

**वापीदेवकुलाद्यैर्धर्मं कुर्वन्ति च त्रिकोणाभिः ।**
**अंगुष्ठमूले रेखास्तु पुत्राः स्युर्दारिका सूक्ष्माः ॥ १४२ ॥**

नराः वापी-देवकुलाद्यैः त्रिकोणाभिः=त्रिकोणयुक्ताभिश्च रेखाभिः धर्मम्=धार्मिककार्यं कुर्वन्ति। अंगुष्ठमूले=ब्रह्मतीर्थे दीर्घा रेखाः पुत्रान् दास्यन्ति, तत्रैव सूक्ष्माः=ह्रस्वा रेखा दारिकाः=कन्याप्रदातृरेखाः स्युः=भवेयुः ॥१४२॥

जिनकी अंगुलियों में बावली और देवताओं की त्रिकोण रेखा होती हैं वे धार्मिक कार्य करने वाले होते हैं, अंगूठे के मूल में बड़ी रेखायें पुत्रों को देने वाली होती हैं और छोटी रेखायें कन्या देने वाली होती हैं ॥ १४२ ॥

**रेखा प्रदेशिनिगा शतायुषां कल्पनीयमूनाभिः ।**
**छिन्नाभिर्द्रुमपतनं बहुरेखारेखिनो निःस्वाः ॥ १४३ ॥**

यस्य हस्ते कनिष्ठिकामूलादारभ्य प्रदेशिनिगा=तर्जनीमूलपर्यन्तगामिनी रेखा भवति सा शतायुषां=शतवर्षपर्यन्तमायुष्मतां कल्पनीया=विचारणीया। ऊनाभिः=तर्जनीमूलपर्यन्तं या न गच्छन्ति ताभिः, अथवा छिन्नाभिः रेखाभिः द्रुमपतनं=वृक्षात् पतनं कल्पनीयम्। बहुरेखारेखिनः=तत्रैव बहु-रेखाभिर्युक्ताः निःस्वाः=धनरहिताः--इति विचारणीयम् ॥ १४३ ॥

कनिष्ठिका के मूलभाग से तर्जनी के मूल तक जाने वाली रेखा सौ वर्ष की आयु वालों की होती है, उससे कम (छोटी) रेखा कम आयु वालों होती है। छिन्न रेखा वृक्ष आदि ऊँचे स्थानों से पतन कराने वाली होती है। बहुत रेखाओं से युक्त रेखाएँ निर्धनत्व की सूचना देती हैं।। १४३ ।।

चिबुक-अधर-दशनानां लक्षणानि

**अतिकृशदीर्घैश्चिबुकैर्निर्द्रव्या मांसलैर्धनोपेताः ।**
**बिम्बोपमैरवक्रैरधरैर्भूपाः तनुभिरस्वाः ।। १४४ ।।**

करतललक्षणकथनानन्तरं चिबुक-अधर-दशनानां लक्षणानि कथ्यन्ते— अतिकृशैः=अत्यन्तकृशैः, दीर्घैश्च=लम्बायमानैश्च, चिबुकैः=मुखस्य अधोभागैः, पुरुषाः निर्द्रव्याः=धनरहिता भवन्ति। बिम्बोपमैः=बिम्बफलसमैः रक्तैः, अवक्रैः=अकुटिलैः, अधरैः=अधरोष्ठैः, भूपाः=राजानो भवन्ति, तनुभिः=सूक्ष्मैः ओष्ठैः अस्वाः=धनरहिता भवन्ति ।। १४४ ।।

हाथ के लक्षण कहकर अब चिबुक (ठोड़ी), अधर और दाँतों के लक्षण कहते हैं— अत्यन्त कृश और लम्बे चिबुक वाले निर्धन होते हैं, मांसयुक्त चिबुक वाले धनी होते हैं, बिम्ब फल के समान लाल एवं जो टेढ़े न हों ऐसे अधरोष्ठ राजाओं के होते हैं। सूक्ष्म ओठों वाला धनरहित होता है ।। १४४ ।।

**ओष्ठैः स्फुटितविखण्डितविवर्णरूक्षैश्च धनपरित्यक्ताः ।**
**स्निग्धा घनाश्च दशनाः सुतीक्ष्णदंष्ट्राः समाश्च शुभाः ।। १४५ ।।**

स्फुटितैः=विखण्डितैः विवर्णैः रूक्षैश्च दशनैर्युक्ता नरा धनपरित्यक्ताः=निर्धना भवन्ति। स्निग्धाः=चिक्कणयुक्ताः घनाः=अविरलाः दशनाः सुतीक्ष्णदंष्ट्राः=समाश्च दन्ताः शुभा भवन्ति ।। १४५ ।।

स्फुटित खण्डित विवर्ण व रूक्ष ओठों वाले धनरहित होते हैं, स्निग्ध और घने दाँतों वाले और तीक्ष्ण दाढ़ों तथा समान दाँतों वाले कल्याणयुक्त होते हैं ।।

तथा च समुद्रः—

**निर्मांसैश्चिबुकैर्दीर्घैर्निर्द्रव्याश्चानुवाचिनः ।**
**समांसलैर्धनोपेता बहुपुत्रसमावृताः ।। १४६ ।।**

आचार्यः समुद्रः कथयति—निर्मांसैः=मांसरहितैः, दीर्घैः=लम्बायमानैः चिबुकैः निर्द्रव्याः=द्रव्यरहिताः पुरुषाः कथनीयाः। समांसलैः=मांसयुक्तैः चिबुकैः धनोपेताः=धनेन युक्ता नरा बहुपुत्रसमावृताः=बहुपुत्रयुक्ताश्च भवन्ति ।। १४६ ।।

आचार्य समुद्र कहते हैं—मांसरहित और लम्बी चिबुक ( ठुड्ढी ) वाले निर्धन होते हैं, मांसयुक्त चिबुक वाले धनी और बहुत पुत्रों से युक्त होते हैं ।। १४६ ।।

**रक्ताधरो नरपतिर्धनवान् कमलाधरः ।**
**स्थूलोष्ठो बहुलोमा च शुष्कैः क्षीणैश्च दुःखितः ।। १४७ ।।**

रक्ताधरः = रक्तवर्णयुक्तोष्ठो नरः, नरपतिः = राजा ( भवति )। कमलाधरः = पद्मोष्ठो धनवान् = लक्ष्मीवान् (भवति)। स्थूलोष्ठः = पृथुलोष्ठः, बहुलोमा = अत्यधिकरोमयुक्तश्च, शुष्कैः = रूक्षैः, क्षीणैश्च = सूक्ष्मैश्च ओष्ठैः दुःखितः = दुखभाग् भवति ।। १४७ ।।

लाल ओठों वाला व्यक्ति राजा होता है। कमल के समान ओठों वाला धनी; मोटे एवं बहुत रोमों वाले ओठों, शुष्क और पतले ओठों वाले पुरुष दुःखी होते हैं ।। १४७ ।।

**उत्तरोष्ठैर्लोहितैश्च धनिनः सौख्यसंयुताः ।**
**खण्डैर्विवर्णैर्निर्द्रव्याः रूक्षैर्दुःखसमन्विताः ।। १४८ ।।**

लोहितैः = रक्तैः उत्तरोष्ठैः–ऊर्ध्वस्थितोष्ठैः = धनिनः = धनयुक्ताः सौख्यसंयुताश्च–सुखसौभाग्ययुक्ताः ( भवन्ति )। खण्डैः = खण्डितैः, विवर्णैः–अशोभनीः ओष्ठैः, निर्द्रव्याः–द्रव्यरहिता भवन्ति, रूक्षैः = शुष्कैः ओष्ठैः, दुःखसमन्विताः = दुःखेन युक्ताः पुरुषा भवन्ति ।। १४८ ।।

ऊपर का लाल ओठ पुरुष को धनी और सुखी बनाता है, खण्डित और विवर्ण (असुन्दर) ओठ निर्धन करता है, रूक्ष (शुष्क) ओठ दुःखी सिद्ध करता है ।। १४८ ।।

**कुन्दकुड्मलसङ्काशैः प्रकारैर्दशनैर्नृपाः ।**
**ऋक्षवानरदन्ताश्च नित्यं क्षुत्परिपीडिताः ।। १४९ ।।**

कुन्दकुड्मलसंकाशैः–कुन्दकुड्मलसदृशैः दशनैः नृपाः – राजानो भवन्ति, ऋक्षवानरदन्ताश्च–ऋक्ष इव, वानर इव दन्ता येषां ते नित्यं–प्रतिदिनं क्षुधा–बुभुक्षया पीडिता भवन्ति ।। १४९ ।।

कुन्दपुष्प की कली के समान दाँतों वाले राजा होते हैं, रींछ और वानर के दाँतों के समान दाँत वाले हमेशा भूख से पीड़ित होते हैं ।। १४९ ।।

**हस्तिदन्ताः खरदन्ताः स्निग्धदन्ता गुणान्विताः ।**
**करालैर्विषमैर्दीर्घैर्दशनैर्दुःखजीविनः ।। १५० ।।**

हस्तिदन्ताः = करिदन्ताः, खरदन्ताः = गर्दभदन्ताः, स्निग्धदन्ताः– चिक्कणदन्ताः गुणान्विताः–विविधगुणैर्युक्ता भवन्ति। करालैः–विकटैः,

विषमैः=असमानैः, दीर्घैः=अतिदीर्घैः दशनैः=दन्तैर्नरा दुःखजीविनः=दुखेन=कष्टेन जीवनं यापयन्ति ॥ १५० ॥

हाथी और गर्दभ ( गदहे ) के समान और स्निग्ध ( चिकने ) दाँतों वाले पुरुष समस्त गुणों से युक्त होते हैं। तथा विकराल, असमान और बड़े दाँतों वाले दुःख भोगने वाले होते हैं ॥ १५० ॥

**द्वात्रिंशद्दन्ता राजान एकोनश्चापि भोगवान्।**
**त्रिंशद्दन्ता नरा ये स्युस्ते सुखदुःखभागिनः ॥ १५१ ॥**

द्वात्रिंशद् दन्ता येषां ते नरा राजानो भवन्ति, एकोनः=एकत्रिंशद् दन्ता यस्य सः भोगवान्=भोग्यपदार्थयुक्तो भवति। त्रिंशद् दन्ता येषां ते नराः सुखस्य दुःखस्य च मिलितरूपेण अथवा क्रमिकरूपेण, भागिनः=भोगिनो भवन्ति ॥ १५१ ॥

बत्तीस (३२) दाँत वाले राजा होते हैं, इकतीस (३१) दाँत वाले समस्त भोगों को भोगने वाले होते हैं, तीस (३०) दाँत वाले मनुष्य सुख और दुःख--दोनों को क्रमशः या एक साथ भोगने वाले होते हैं ॥ १५१ ॥

**एकोनत्रिंशद्दशनाः पुरुषा दुःखजीविनः।**
**अष्टविंशद्रदा येषां तेऽतिदुःखस्य भाजना ॥ १५२ ॥**

एकोनत्रिंशद् दशनाः=दन्तास्तैर्युक्ता पुरुषाः=नराः दुःखजीविनः=दुखेन=कष्टेन जीवन्ति। येषां=पुरुषाणां अष्टाविंशतिः एतत्संख्याकाः रदाः=दन्ताः भवन्ति ते पुरुषाः=अतिदुःखस्य=अत्यन्त दुखानां भाजनानि=पात्राणि भवन्ति ॥ १५२ ॥

उनतीस (२९) दाँतों वाले पुरुष दुःखपूर्वक जीवन व्यतीत करते हैं, अट्ठाइस (२८) दाँतों वाले पुरुष तो अत्यन्त दुःखी रहते हैं ॥ १५२ ॥

## जिह्वा-ताल्वोर्लक्षणम्

**जिह्वा रक्ता दीर्घा श्लक्ष्णा सुसमा च भोगिनो ज्ञेया।**
**श्वेता कृष्णा परुषा निर्द्रव्याणां तथा तालु ॥ १५३ ॥**

सम्प्रति जिह्वा-ताल्वोर्लक्षणं कथ्यते-येषां जिह्वा रक्ता दीर्घा श्लक्ष्णा-श्रेष्ठा सुसमा च भवति ते पुरुषाः भोगिनः=भोज्यपदार्थानां भोगिनो ज्ञेयाः=ज्ञातव्याः। श्वेता=श्वेतवर्णयुक्ता कृष्णा=कृष्णवर्णयुक्ता, परुषा=कठोरा जिह्वा निर्द्रव्याणां=द्रव्यरहितानां पुरुषाणां भवति। तथा तालु=जिह्वालक्षणवत् तालोः लक्षणानि भवन्ति ॥ १५३ ॥

जिह्वा-लक्षण—लाल बड़ी श्रेष्ठ और समान जिह्वा वाले पुरुष भोग्यपदार्थ भोगने वाले होते हैं। सफेद, काली और कठोर जिह्वा निर्धनों की होती है। जिह्वा के समान ही तालु के भी लक्षण समझने चाहिए॥ १५३ ॥

यथा समुद्रः—

**कृष्णा जिह्वा भवेद् यस्य समला यदि वा भवेत्।**
**स पापवान् भवेन्मर्त्यो रूक्षा स्थूलाऽथ वा भवेत्॥ १५४॥**

आचार्यः समुद्रोऽपि कथयति—यस्य=पुरुषस्य, कृष्णा=कृष्णवर्णा जिह्वा भवेत्, यदि वा समला=मलेन युक्ता (मलिना) जिह्वा भवेत्, अथवा रूक्षा=नीरसा, स्थूला=पृथुकाया जिह्वा भवेत् स मर्त्यः=पुरुषः पापकर्मणि लिप्तो भवेत्॥ १५४॥

जिस पुरुष की जिह्वा काली, मलिन, रूक्ष ( रूखी ) अथवा मोटी हो वह मनुष्य पापी ( पापकर्म करने वाला ) होता है॥ १५४॥

**श्वेतजिह्वा नरा ज्ञेयाः शौचाचारविवर्जिताः।**
**पद्मपत्रसमा जिह्वा सूक्ष्मा दीर्घा सुशोभना॥ १५५॥**

श्वेतजिह्वाः नराः=पुरुषाः, शौचाचारविवर्जिताः=पवित्रता-सदाचार-रहिताः, ज्ञेयाः ज्ञातव्याः। पद्मपत्रसमा=कमलपत्रसमा, सूक्ष्मा=कृशा, दीर्घा=लम्बायमाना जिह्वा ( फलादेशप्रसंगे ) सुशोभना=अतीव श्रेष्ठा भवति॥

श्वेत रंग की जिह्वा वाले पुरुष पवित्रता एवं आचार-विचार से रहित होते हैं। कमल-पत्र के समान एवं पतली तथा लम्बी जिह्वा ही अत्यन्त श्रेष्ठ कही गयी है। ( ऐसी जिह्वा वाले पुरुष श्रेष्ठ होते हैं )॥ १५५॥

**न स्थूला नातिविस्तीर्णा येषां ते मनुजाधिपाः।**
**निम्ना दीर्घा च ह्रस्वा च रक्ताग्ररसना यदि।**
**सर्वविद्याप्रवक्ताऽसौ भवेन्नास्त्यत्र संशयः॥ १५६॥**

न स्थूला=न पृथुला,=न पृथुला, नातिविस्तीर्णा=नात्यधिकविस्तीर्णा जिह्वा येषां=मानवानां ते मनुजाधिपाः=ते पृथ्वीपाला भवन्ति। यस्य अग्ररसना=जिह्वाया अग्रिमो भागः, निम्ना तथा दीर्घा=लम्बायमाना ह्रस्वा च भवति स पुरुषः सर्वविद्या प्रवक्ता=सम्पूर्णविद्यानां ( चतुर्दश-विद्यानामष्टादशविद्यानां वा ) प्रवक्ता भवेत्। अत्र=अस्मिन् विषये न संशयः=संशयस्य स्थानं नास्ति॥ १५६॥

राजाओं की जिह्वा न मोटी होती है, न चौड़ी। जिसकी जीभ का अग्रिम भाग नीचा, सूक्ष्म तथा लाल हो तो वह पुरुष समस्त विद्याओं का जानने वाला होता है—इसमें किसी प्रकार का संशय नहीं है ॥ १५६ ॥

**कृष्णतालुर्नरो यस्तु स भवेत् कुलनाशनः।**
**विकृतः स्फुटितो यस्य तालुस्तस्य न शोभनः॥ १५७॥**

यो नरः=पुरुषः, कृष्णतालुः भवेत् स पुरुषः कुलनाशनः=स्वकुलस्य=नाशकर्ता भवति। यस्य=पुरुषस्य तालुः विकृतः स्फुटितो वा भवेत् स शोभनः=कल्याणकारी न भवति॥ १५७॥

तालु-लक्षण—जिस पुरुष का तालु काला हो वह अपने कुल का नाशक होता है। विकृत और स्फुटित तालु वाला पुरुष भी शुभकारी नहीं होता॥ १५७॥

**सिंहतालुर्नरपतिः गजतालुस्तथैव च।**
**पद्मतालुर्भवेद् राजा श्वेततालुश्च निर्धनः॥ १५८॥**

सिंहतालुः=सिंहस्य तालुरिव तालुर्यस्य सः नरपतिः=राजा भवति। गजतालुः-गजस्य हस्तिनः तालु इव तालु यस्य सोऽपि राजा भवति। पद्मतालुः=कमलतालुरपि राजा भवति। श्वेततालुः=उज्ज्वलतालुः धवलः, रक्तवर्णरहितः तालुः यस्य स निर्धनो भवति॥ १५८॥

सिंह, हाथी और कमल के समान तालु वाला पुरुष राजा होता है और श्वेत तालु वाला पुरुष निर्धन होता है॥ १५८॥

आस्यलक्षणानि

**वक्त्रं सौम्यं संवृत्तममलं श्लक्ष्णं समं च भूपानाम्।**
**विपरीतं क्लेशभुजां दुर्भगाणां महामुखम्॥१५९॥**

सम्प्रति आस्यस्य=मुखस्य लक्षणानि कथ्यन्ते—सौम्यं=शान्तं,संवृत्तम्=चक्राकारम्, अमलम्=निर्मलम्=श्लक्ष्णम्=चिक्कणं, समम्=समानम् च वक्त्रम्=मुखम् भूपानाम्=पृथ्वीपतीनां भवति। विपरीतम्=उक्तलक्षण-रहितं मुखं क्लेशभुजाम=कष्टभोक्तॄणां भवति। महामुखम्=वृहन्मुखं=दुर्भगाणाम्=दौर्भाग्ययुक्तानां भवति॥ १५९॥

मुख (चेहरा) का लक्षण—सौम्य, गोल, निर्मल, सुन्दर और सम मुख वाले राजा होते हैं। उक्त गुणों से विपरीत असौम्य, लम्बे, मलिन, असुन्दर मुख क्लेश भोगने वालों के होते हैं। दुःख भोगने वालों का मुख बड़ा होता है॥ १५९॥

तथा च समुद्रः—

**सौम्यं च संवृतं वक्त्रममलं यस्य देहिनः।**
**महाराजो भवेन्नित्यं विपरीते तु निर्धनः॥ १६०॥**

समुद्रः कथयति--सौम्यम्=शान्तं संवृत्तं=वर्तुलं, अमलं=निर्मलं वक्त्रम्=मुखम् यस्य देहिनः=यस्य पुरुषस्य भवति स महाराजः=राज्ञामधीशो भवेत् विपरीते=उक्तलक्षणविपरीते तु मनुजो निर्धनः=धनरहितो भवति ॥ १६० ॥

सौम्य=शान्त, गोल, निर्मल मुख वाला पुरुष महान् राजा होता है। उक्त लक्षणों से विपरीत लक्षणों वाला पुरुष निर्धन होता है ॥ १६० ॥

## मुखलक्षणम्

**स्त्रीमुखमनपत्यानां शाठ्यवतां मण्डलं परिज्ञेयम् ।**
**दीर्घं निर्द्रव्याणां भीरुमुखाः पापकर्माणः ॥ १६१ ॥**

स्त्रीमुखम्=स्त्रीणामिव मुखं अनपत्यानाम्=सन्तानरहितानां पुरुषाणां भवति। मण्डलम्=वर्तुलं मुखं शाठ्यवतां=शाठ्ययुक्तानां परिज्ञेयम्=ज्ञातव्यम्। दीर्घम्=लम्बायमानं मुखं निर्द्रव्याणां=द्रव्यरहितानां भवति। भीरुमुखाः=भयसहितं मुखं येषां ते नराः, पापकर्माणः=पापकर्मकर्तारो भवन्ति ॥ १६१ ॥

स्त्रियों के मुख के समान मुख वालों में सन्तान का अभाव होता है, गोलमुख वाले शठ, लम्बे मुख वाले निर्धन और डरे हुए के समान मुख वाले पापकर्मकारी होते हैं ॥ १६१ ॥

**धूर्तानां चतुरस्रं निम्नं वक्त्रं च तनयरहितानाम् ।**
**कृपणानामतिह्रस्वं सम्पूर्णभोगिनां कान्तम् ॥ १६२ ॥**

धूर्तानाम्=वञ्चनचतुराणां चतुरस्रम्=चतुष्कोणयुक्तं मुखं भवति। निम्नं वक्त्रं=मुखं तनयरहितानाम्=पुत्ररहितानां भवति। अतिह्रस्वं=लघुमुखं कृपणानां=लोभिनां भवति। कान्तम्=देदीप्यमानं मुखं सम्पूर्णभोगिनां=समस्तसुखभोगिनां पुरुषाणां भवति ॥ १६२ ॥

चार कोणों वाला ( चोकोर ) मुख धूर्तों ( दूसरे को ठगने वालों ) का होता है। निम्न मुख वाले पुत्ररहित, छोटे मुख वाले कृपण ( कंजूस ) और क्रान्तियुक्त मुख वाले समस्त सुखों को भोक्ता होते हैं ॥ १६२ ॥

तथा च समुद्रः—

**स्त्रीमुखं निरपत्यानां मण्डलं शाठ्यसेविनाम् ।**
**दीर्घं मुखं च विप्राणां भीरुवक्त्रा दुराशयाः ॥ १६३ ॥**

समुद्रोऽपि कथयति—स्त्रीमुखं=नारीणामिव मुखं निरपत्यानाम्=सन्तति रहितानाम्, भवति। मण्डलम्=वर्तुलं मुखं शाठ्यसेविनाम्=शठता-

करणे तत्पराणाम् भवति। दीर्घं-बृहत् मुखं विप्राणाम्-ब्राह्मणानां भवति। भीरुवक्त्राः-भययुक्तं मुखं येषां ते तथा दुराशयाः-दुष्ट आशयः=विचारो येषां कलुषितमनसां भवन्ति ॥ १६३ ॥

स्त्रियों के समान मुख वाले पुरुष सन्तानरहित, गोल मुख वाले शठता करने वाले, बड़े मुख वाले ब्राह्मण और भयङ्कर मुख वाले दुष्टविचारों वाले होते हैं ॥१६३॥

चतुरस्रं तु धूर्तानां निम्नैः सुतविवर्जिताः।
कृपणानां तथा ह्रस्वं चिपिटं परजीविनाम् ॥ १६४ ॥

चतुरस्रं=चतुष्कोणात्मकं, तु=निश्चयेन, धूर्तानां=वञ्चकानाम्, निम्नैः मुखैः सुतवर्जितानां=सुतरहितानाम्, तथा ह्रस्वम्=लघुमुखं कृपणानाम्=प्राणान्तेऽपि वित्तव्ययमसहमानानाम्, चिपिटं मुखं परजीवितम्-अपरेषां साहाय्येन जीविनां भवति ॥ १६४ ॥

चतुष्कोण ( चौकोर ) मुख धूर्तों ( वञ्चकों ) का, नीचा मुख सन्तानरहितों का, छोटा मुख कृपणों ( कंजूसों अर्थात् प्राणान्त होने पर भी धन का खर्च न करने वालों) का और चिपिटा मुख दूसरे के सहारे जीने वालों का होता है ॥१६४॥

यन्मुखं मांसलं स्निग्धं सप्रभं प्रियदर्शनम्।
वर्णाढ्यं सन्धिविश्लिष्टं अजस्रं सुखभागिनाम् ॥ १६५ ॥

यन्मुखम्=यस्य मुखं मांसलम्-मांसयुक्तम्, स्निग्धम्=स्नेहिलम्, सप्रभम्-प्रभायुक्तम्, प्रियदर्शनम्—मनोहारिदर्शनम्, वर्णाढ्यम्=श्रेष्ठ-वर्णयुक्तम्, सन्धिविश्लिष्टम्=सन्धानरहितम्, अजस्रम्-निरन्तरम्, सुख-भागिनाम्-सुखभोगिनाम् भवति ॥ १६५ ॥

जिस पुरुष का मुख मांसल, स्निग्ध प्रभा से युक्त, सुन्दर, श्रेष्ठ वर्णवाला और सिकुड़न से ( झुर्रियों ) से रहित हो वह निरन्तर सुखों को भोगने वाला होता है ॥ १६५ ॥

### श्मश्रुलक्षणम्

अस्फुटिताग्रं स्निग्धं श्मश्रु शुभं मृदु च सन्नतं चैव।
रक्तैः परुषैश्चौराः श्मश्रुभिरल्पैर्विज्ञेयाः ॥ १६६ ॥

सम्प्रति श्मश्रोः लक्षणानि आह अस्फुटिताग्रम्-न स्फुटिताग्रम्-न स्फुटितः अग्रो यस्य तत्, स्निग्धम्=चिक्कणम्, मृदु=कोमलं, सन्नतम्=उन्नतम् श्मश्रु शुभं-कल्याणप्रदं भवति। रक्तैः=रक्तवर्णैः पुरुषैः=कठोरैः, अल्पैः-स्वल्परोमयुक्तैः श्मश्रुभिः, पुरुषाः चौराः=चौरकार्मकर्तारो विज्ञेयाः-ज्ञातव्याः ॥ १६६ ॥

दाढ़ी-मूछ के लक्षण—अस्फुटित अग्रभाग स्निग्ध ( चिकनी ) कोमल और उन्नत श्मश्रु ( दाढ़ी मोंछ ) शुभ एवं कल्याणकारी होती है। लाल रंग की कठोर ( कड़ी ) और स्वल्प बालों से युक्त मोंछ-दाढ़ी वाले पुरुष को चोर समझना चाहिए ॥ १६६ ॥

तथा च समुद्रः—

**स्निग्धमस्फुटिताग्रं च सन्नतं श्मश्रु चेष्यते।**
**रक्तैरल्पैस्तथा रूक्षैः श्मश्रुभिस्तस्कराः स्मृताः ॥ १६७ ॥**

आचार्यः समुद्रः कथयति—

स्निग्धम्=चिक्कणम्, अस्फुटिताग्रम्=न स्फुटिताग्रभागम्, सन्नतम्=श्रेष्ठमुन्नतं श्मश्रु च इष्यते=शोभनं कथ्यते। रक्तैः=रक्तवर्णैः, अल्पैः=स्वल्परोमयुक्तैः तथा रूक्षैः=शुष्कैः रोमयुक्तैः श्मश्रुभिः पुरुषाः तस्कराः=चौराः ( चौरकर्मणि व्यापृक्ताः ) स्मृताः कथिताः ॥ १६७ ॥

आचार्य समुद्र कहते हैं—स्निग्ध ( चिकनी ) अस्फुटिताग्र, श्रेष्ठ, उन्नत श्मश्रु (दाढ़ी मोंछ ) शुभ कही गयी है। लाल रंग की, थोड़े बालों वाली, और रूखी दाढ़ी-मोंछ वाला पुरुष चोरी करने वाला होता है ॥ १६७ ॥

## कर्णलक्षणम्

**निर्मांसैः कर्णैः पापमृत्यवश्चर्पटैः सुबहुभोगाः।**
**कृपणाश्च ह्रस्वकर्णाः शंकुश्रवणाश्चमूपतयः ॥ १६८ ॥**

सम्प्रति कर्णस्य लक्षणमाह—निर्मांसैः=मांसरहितैः कर्णैः=श्रोत्रैः, पापमृत्यवः=अपमृत्यवो भवन्ति। चर्पटैः कर्णैः सुबहुभोगाः=सुन्दरबहुभोगाः भवन्ति। ह्रस्वकर्णाः=लघुकर्णाः कृपणाः=प्राणान्तेऽपि वित्तव्ययमसहमानाः, शङ्कुकर्णाः=कीलकर्णाः, चमूपतयः=सेनानायका भवन्ति ॥ १६८ ॥

कानों के लक्षण—मांसरहित कान वाले की पापकर्म द्वारा मृत्यु ( अपमृत्यु ) होती है। चिपटे कान वाले बहुत से सुन्दर भोगों को भोगने वाले होते हैं। छोटे कान वाले कृपण ( प्राणान्त होने पर भी वित्त-व्यय न कर वाले ) होते हैं। शङ्कु ( कील ) के समान कर्ण वाले सेनानायक होते हैं ॥ १६८ ॥

**रोमशकर्णा दीर्घायुषश्च धनभागिनो विपुलकर्णाः।**
**क्रूराः शिरावनद्धैर्व्यालम्बैर्मांसलैः सुखिनः ॥ १६९ ॥**

रोमशकर्णाः, दीर्घायुषः=चिरंजीविनः, विपुलकर्णाः=बृहत्कर्णाः, धनयुक्ताः, शिरावनद्धैः=नाडीयुक्तैः कर्णैः, क्रूराः=हिंसादिभयंकरकर्मणि संपृक्ताः,

व्यालम्बैः=दीर्घैः मांसलैः=मांसयुक्तैः कर्णैः, सुखिनः=समस्तसुखान्विताः भवन्ति ॥ १६९ ॥

रोमों से युक्त कानों वाले दीर्घजीवी, बड़े कानों वाले धनी, नाड़ियों से युक्त कान वाले हिंसादि भयंकर क्रूर कर्म करने वाले, लम्बे और मांसयुक्त कान वाले समस्त सुखों के भोगी होते हैं ॥ १६९ ॥

तथा च समुद्रः--

**ह्रस्वकर्णा महाभोगा महाकर्णाश्च ये नराः ।**
**आवर्तकर्णा धनिनः स्निग्धकर्णास्तथैव च ॥ १७० ॥**

तथैव आचार्यः समुद्रोऽपि कथयति--ह्रस्वकर्णाः=लघुकर्णाः, महाकर्णाः=दीर्घकर्णाश्च ये नरास्ते महाभोगाः=अत्यन्तभोगशालिनो भवन्ति । आवर्तकर्णाः=भ्रमराकारकर्णाः धनिनः=धनयुक्ताः स्निग्धकर्णाः=चिक्कर्णाः, तथैव=पूर्वोक्तप्रकारेण, धनिनो भवन्ति ॥ १७० ॥

छोटे कानों तथा बड़े कानों वाले पुरुष महाभोगी, जिनके कानों में आवर्त ( भ्रमर ) होता है तथा जिनके चिकने कान होते हैं वे धनी होते हैं ॥ १७० ॥

**दीर्घायुषः शङ्कुकर्णास्त्रुटितकर्णा महाधनाः ।**
**सुखान्विता दीर्घकर्णा लम्बकर्णास्तपस्विनः ॥ १७१ ॥**

शङ्कुकर्णाः=शङ्कु-लौहकीलकम् इव कर्णाः दीर्घायुषः=दीर्घजीविनः; त्रुटितकर्णाः=त्रुटितौ कर्णौ येषां ते महाधनाः=विशेषधनयुक्ताः; दीर्घकर्णाः=बृहत्कर्णाः सुखान्विताः=सुखेन युक्ताः; लम्बकर्णाः=लम्बायमानकर्णयुक्ताः तपस्विनः=तपश्चर्यायां रता भवन्ति ॥ १७१ ॥

शङ्कुकर्ण ( लोहे की कील के समान ) वाले दीर्घ आयु, त्रुटित कर्ण वाले महान् धनी, बड़े कानों वाले सुखी और लम्बे कान वाले तपस्वी होते हैं ॥ १७१ ॥

**निर्मांसैः पापमरणाश्चिपिटैर्भोगिनो नराः ।**
**दीर्घायुषो लोमकर्णा धनिनो विपुलैः स्मृताः ॥ १७२ ॥**

निर्मांसैः=मांसरहितैः कर्णैः पापमरणाः=पापकर्मद्वारा मृत्युं प्राप्नुवन्ति । चिपिटैः=चर्पटैः, कर्णैः नराः=मनुष्याः भोगिनः=भोग्यपदार्थानां भोगिनः, लोकमकर्णाः=रोमयुक्तकर्णाः दीर्घायुषः=दीर्घजीविनः, विपुलैः=विस्तीर्णैः कर्णैः धनिनः=धनयुक्ता स्मृताः=कथिताः ॥ १७२ ॥

मांसरहित कान वाले पापकर्म द्वारा अपमृत्यु को प्राप्त होते हैं, चिपटे कान वाले भोगी होते हैं, जिनके कानों पर बाल होते हैं वे लम्बी आयु वाले होते हैं और बड़े कानों वाले धनी होते हैं ॥ १७२ ॥

**शिरावनद्धैर्विषमा मांसलैः सुखभागिनः ॥ १७३ ॥**

शिरावनद्धैः=शिरालैः, कर्णैः, विषमाः—क्रूरकर्मकर्तारः; मांसलैः=समासैः कर्णैः सुखभागिनः—सुखस्य भागिनो भवन्ति ॥ १७३ ॥

गण्डस्थललक्षणम्

**भोगी त्वनिम्नगण्डो मन्त्री सम्पूर्णमांसगण्डो यः ।**

नासालक्षणम्--

**सुखभाक् शुकसमनासश्चिरजीवी शुष्कनासश्च ॥१७४ ॥**

कर्णलक्षणकथनानन्तरं गण्डनासालक्षणमुच्यते—अनिम्नगण्डः—उन्नत-गण्डस्थलः पुरुषो भोगी=भोग्यपदार्थभोक्ता, सम्पूर्णमांसगण्डः—मांसयुक्त-गण्डस्थलः सः—पुरुषः, मन्त्री—मन्त्रणाप्रदाने समर्थो भवति ।

शुकसमनासः—शुकस्य नासा इव नासायस्य सः सुखभाक्—सुखानां भाजनम्, शुष्कनासश्च—निर्मांसनासः, चिरजीवी—दीर्घजीवी भवति ॥ १७४ ॥

उन्नत गण्डस्थलों वाला पुरुष भोगी, मांस से भरे हुए गण्डस्थल वाला पुरुष राजा को मन्त्रणा देने वाला मन्त्री होता है ॥

नासिका-लक्षण--शुक ( तोते ) के समान नाक वाला पुरुष समस्त सुखों को भोगने वाला होता है और शुष्क ( मांसरहित ) नाक वाला पुरुष दीर्घजीवी होता है ॥ १७४ ॥

**छिन्नानुरूपयाऽगम्यागामिनो दीर्घया तु सौभाग्यम् ।**
**आकुञ्चितया चौराः स्त्रीमृत्युः स्याच्चिपिटनासः ॥ १७५ ॥**

छिन्नानुरूपया—छिन्ननासा इव प्रतिभाति यस्य नासा सः अगम्या-गामिनः—न गमनीया स्त्री तस्यां गामिनः—गमनशीलाः रतिकर्मरताः, दीर्घया—लम्बायमानया नासया तु सौभाग्यम्—सौभाग्ययुक्तो भवति, आकुञ्चि-तया—अवगुण्ठितया नासया चौराः—चौर्यकर्मकर्तारः भवन्ति, चिपिटनासः—चर्पटनासः, स्त्रीमृत्युः—स्त्रियाः मृत्युः यस्य स भवति ॥ १७५ ॥

कटी हुई नाक के समान नाक वाले पुरुष अगम्यागमन करते हैं, लम्बी नाक-वाला पुरुष भाग्यशाली होते हैं, आकुञ्चित नाक वाले चोर होते हैं, चिपटी नाक वाले स्त्री की मृत्यु करने वाले होते हैं ॥ १७५ ॥

**धनिनोऽग्रवक्रनासा दक्षिणावनताः प्रभक्षणाः क्रूराः ।**
**ऋज्वी स्वल्पच्छिद्रा सुपुटा नासा सुभाग्यानाम् ॥ १७६ ॥**

अग्रवक्रनासा=अग्रे वक्रनासा येषां ते, नासाया अग्रिमो भागो वक्रो येषां ते धनिनः-धनधान्यसम्पन्नाः, दक्षिणावनताः-नासाया अग्रिमो भागो दक्षिणावनतो येषां ते प्रभक्षणाः-बहुभोजनकर्तारः क्रूराश्च=हिंसादिभयङ्कर-कर्मकर्तारः। ऋजवी=सरला स्वल्पच्छिद्रा-लघुच्छिद्रयुक्ता (लघुपुटा) सुभाग्यानाम् सु - शोभनं भाग्यम् येषां तेषाम् एतादृशी नासा भवति ॥ १७६ ॥

आगे की झुकी हुई नाक धनियों की होती है, दाहिनी ओर झुकी नाक वाले अधिक भोजन करने वाले और क्रूर होते हैं। सीधी और छोटे छिद्रों वाली तथा सुन्दर नासापुटों वाली नाक सुन्दर भाग्यशाली पुरुषों की होती है ॥ १७६ ॥

तथा च समुद्रः—

**शुकनासः सौख्यभोगी शुष्कनासा चिरायुषः।**
**छिन्नानुरूपा पुंसां स्यान्नासा तेऽगम्यगामिनः ॥ १७७ ॥**

शुकनासः=शुकस्य तुण्ड इव नासा यस्य सः सौख्यभोगी=सौख्यस्य=सुखस्य भोक्ता, शुष्कनासा=मांसरहितनासा चिरायुषः=दीर्घजीविनो, भवति। छिन्नानुरूपा च सा प्रतिभाति येषां ते पुरुषाः अगम्या=न गमनीया स्त्री (सहवासायोग्या स्त्री) तस्यां गामिनः=तां गच्छन्ति ॥ १७७ ॥

शुकतुण्ड के समान नाक वाले सुखों के भोक्ता तथा शुष्क नाक वाले दीर्घजीवी होते हैं। देखने में कटी नाक के समान नाक वाले पुरुष अगम्या स्त्री के साथ सहवास करते हैं ॥ १७७ ॥

**दीर्घनासा भोगयुक्ता अग्रवक्रा धनान्विताः।**
**क्रूरा दक्षिणवक्राश्च स्पष्टनासा नृपोत्तमाः ॥ १७८ ॥**

दीर्घनासाः=लम्बायमानानासाः भोगयुक्ताः=भोग्यपदार्थभोक्तारः, अग्रवक्राः=नासायाः अग्रिमो भागः वक्रः=कुटिलः येषां ते धनान्विताः=धनेन सम्पन्नाः, दक्षिणवक्राः=नासायाः अग्रिमो भागो दक्षिणावनतो येषां ते क्रूराः=हिंसादिभयङ्करकर्मणिरताः, स्पष्टा नासाः-स्वाभाविकरूपेण सरल-नासाः नृपो माः-पृथ्वीपालेषु उत्तमपृथ्वीपाला भवन्ति ॥ १७८ ॥

लम्बी नाक वाले भोगों से युक्त, अग्रिमभागमें वक्रनासा वाले धन से युक्त होते हैं, दक्षिण की ओर झुकी हुई नाक वाले हिंसादि भयंकर क्रूर कर्म करने वाले होते हैं, स्वाभाविक रूप से सीधी नाक श्रेष्ठ राजाओं की होती है ॥ १७८ ॥

**स्त्रीमृत्युश्चर्पटाभिश्च कुटिलाभिश्च तस्कराः ॥ १७९ ॥**

चपटाभिः—चिपिटाभिः स्त्रीमृत्युः—स्त्रिया मृत्युः भवति, कुटिलाभिः—वक्राभिः नासाभिश्च पुरुषाः तस्करा भवन्ति ॥ १७९ ॥

चिपटी नाक वाले की स्त्री की मृत्यु हो जाती है, टेढ़ी नाक वाले चोर होते हैं ॥ ७९ ॥

क्षुत्-लक्षणम्

**धनिनां क्षुतं सकृद् द्वित्रिपिण्डितं ह्लादि सानुनादं च ।**
**दीर्घायुषां प्रसक्तं विज्ञेयं संहितं चैव ॥ १८० ॥**

धनिनां=धनयुक्तानां पुरुषाणां क्षुतं—छिक्का सकृत्=एकवारम्, द्वित्रिपिण्डितम्, ह्लादि सानुनादं=नादसहितं भवति। प्रसक्तं संहितम्=कतिपयवारं छिक्का दीर्घायुषां=दीर्घजीविनां भवति।। १८० ॥

धनी पुरुषों को एक बार या दो तीन बार ही छिक्का ( छींक ) नाद (आवाज) के साथ होती है। तीन से अधिक इकट्ठी कई छिक्कायें विशेष स्वर के साथ दीर्घ जीवियों को होती हैं ॥ ८० ॥

तथा च पराशरः—

**सकृत् क्षुतं भोगवतां द्विर्धनाय चिरायुषाम् ।**
**त्रिश्चतुर्भोगनाशाय परमस्मात् तु दोषजम् ॥ १८१ ॥**

सकृत्=एकवारम् क्षुतम्—छिक्का भोगवताम्—भोगशालिनां भवति। द्विः छिक्का धनाय=धनप्राप्तये भवति, त्रिः छिक्का—चिरायुषां भवति, चतुः छिक्का भोगनाशाय भवति, अस्मात् तु परम्—चतुःछिक्कादधिकछिक्का तु दोषजम्—कञ्चिद् रोगं ज्ञापयति ॥ १८१ ॥

एक छींक (क्षुत्) भोगियों को, दो छींकें धनी पुरुष को, तीन छीकें दीर्घजीवियों को होती हैं। चार छींके भोग्यपदार्थों के नाश वाली होती हैं, चार छीकों से अधिक विशेष दोष ( रोग ) से समझनी चाहिये ॥ ८१ ॥

लोचनलक्षणम्

**पद्मदलाभैर्नेत्रैर्धनिनो रक्तान्तविलोचनाः ।**
**श्रियो भाजः मधुपिंगलैर्महार्था मार्जारविलोचनैः पापाः ॥१८२॥**

पद्मदलाभैः—कमलपत्रसमैः विलोचनैः=नेत्रैः धनिनः—धनयुक्ताः, रक्तान्तविलोचनाः=रक्तो नेत्रस्य अन्तिमो भागो येषां ते, श्रियोभाजः=लक्ष्मीवन्तः; मधुपिंगलैः=मधु इव पिंगलनेत्रैः—महार्थाः बहुधनवन्तः पुरुषाः, मार्जारविलोचनैः—विडालनेत्रैः—पापाः—पापकर्मरताः पुरुषा भवन्ति ॥१८२॥

कमलदल के समान नेत्र वाले धनी, नेत्रों का अन्तिमभाग रक्त ( लाल ) जिनका हो वे लक्ष्मी के पात्र या शोभा से युक्त, शहद के समान पिंगल नेत्र वाले बड़े धनी, और विडाल ( बिल्ली ) के समान नेत्र वाले पापी ( पापकर्म करने वाले ) होते हैं ॥ ८२ ॥

**हरिणाक्षा मण्डललोचनाश्च जिह्मैश्च लोचनैश्चौराः ।**
**क्रूराः केकरनेत्रा गजसदृशविलोचनाश्च भूपतयः ॥ १८३ ॥**

हरिणाक्षाः=हरिणनेत्रवत् नेत्रयुक्ताः, मण्डललोचनाः=वृत्ताकारनेत्रयुक्ताः, जिह्मैः=कुटिलैः=वक्रैः लोचनैश्च=नेत्रैश्च पुरुषाः चौराः भवन्ति । केकरनेत्राः=वलीरनेत्राः क्रूराः=क्रूरकर्मनिरताः; गजसदृशविलोचनाः=हस्तिसदृशनेत्रयुक्ताः पुरुषाः, भूपतयः=राजानो भवन्ति ॥ १८३ ॥

हरिण के समान नेत्र वाले, गोल नेत्र वाले, कुटिल (ऐंचाताना) नेत्रों वाले पुरुष चोर होते हैं, केकरनेत्र ( एक भौं ऊँची और दूसरी नीची भौंह करके देखने वाले ) क्रूर होते हैं, हाथी के नेत्र के समान नेत्रों वाले राजा होते हैं ॥ ८३ ॥

**ऐश्वर्यं गम्भीरैर्नीलोत्पलकान्तिभिश्च विद्वांसः ।**
**अतिकृष्णतारकाणामक्ष्णामुत्पाटनं भवति ॥ १८४ ॥**

गम्भीरैः=चञ्चलनेत्ररहितैः ऐश्वर्यं=समस्तसुखोत्पादकमैश्वर्यं लभ्यते । नीलोत्पलकान्तिभिश्च नेत्रैः विद्वांसः=पण्डिता भवन्ति । अतिकृष्णतारकाणाम्=अत्यधिककृष्णवर्णतारकाणाम्=अक्ष्णाम्=नेत्राणाम्, उत्पाटनं=नेत्राणां हानिर्भवति ( अन्धो भवतीत्यर्थः )॥ १८४ ॥

गम्भीर नेत्रों से युक्त पुरुष समस्त सुख देने वाले ऐश्वर्य से युक्त होते हैं, नीले कमल की कान्ति वाले पुरुष विद्वान् होते हैं । अत्यधिक काले तारकों वाले पुरुषों के नेत्रों की हानि होती है ( अर्थात् वे अन्धे हो जाते हैं )॥ १८४ ॥

**मन्त्रित्वं स्थूलदृशां श्यावा च भवति सौभाग्यम् ।**
**दीना दृक् निःस्वानां स्निग्धा विपुलार्थभोगवताम् ॥ १८५ ॥**

स्थूलदृशाम्=पृथुनेत्राणाम् पुरुषाणां मन्त्रित्वं=मन्त्रिपदं मिलति, श्यावाक्षाणाम् =कृष्णनेत्राणाम् च सौभाग्यं भवति, दीना दृक्=दीनपुरुषवत् दृष्टिः निःस्वानां=धनरहितानां भवति, स्निग्धा दृष्टिः विपुलार्थभोगवताम्=बहुधनभोगवतां च भवति ॥ १८५ ॥

स्थूल नेत्र वाले मन्त्री होते हैं, श्याम ( कृष्ण ) नेत्र वाले सौभाग्यशाली होते हैं । दीनपुरुषों के नेत्रों के समान नेत्र निर्धनों के होते हैं, स्निग्ध नेत्र वाले बहुत धनी एवं सौभाग्यशाली होते हैं ॥ १८५ ॥

तथा च समुद्रः—

समे गोक्षीरवर्णाभे रक्तान्ते कृष्णतारके।
प्रसन्ने च विशाले च स्निग्धे चैवायते शुभे॥ १८६॥

आचार्यः समुद्रः कथयति—उभे नेत्रे समे=समे, गोक्षीरवर्णाभे=गोदुग्धधवल-नेत्रे, रक्तान्ते=नेत्रस्य प्रान्तभागे अरुणिमवर्णे कृष्णतारके=श्यामतारके, प्रसन्ने=प्रसादयुक्ते विशाले=दीर्घे, स्निग्धे=स्नेहयुक्ते, आयते=दीर्घे च शुभे भवतः॥ १८६॥

समुद्राचार्य कहते हैं—समान ( बरांबर ) नेत्र, गाय के दूध के समान नेत्र, प्रान्तभाग रक्तिमा से युक्त नेत्र, कृष्ण ( काले ) तारक वाले नेत्र, देखने में प्रसन्न प्रतीत होने वाले नेत्र, बड़े-बड़े एवं स्निग्ध ( स्नेहिल ) और चौड़े नेत्र ही कल्याण-कारी होते हैं॥ १८६॥

अतसीपुष्पसंकाशे भवेतां यस्य लोचने।
नृपतिः स तु विज्ञेयः समुद्रवचनं यथा॥ १८७॥

आचार्यसमुद्रस्य वचनानुसारं यत् यस्य=पुरुषस्य=अतसीपुष्पसंकाशे=अतसीपुष्पसदृशे, लोचने=नेत्रे भवेताम् सः पुरुषः, भूपतिः=राजा, विज्ञेयः॥१८७॥

आचार्य समुद्र के कथनानुसार कि जिसके अतसी (अलसी) के पुष्प के समान नेत्र हों वह राजा होता है॥ १८७॥

व्याघ्रचक्षुर्धनैर्युक्ताः केकराक्षाः कलिप्रियाः।
विडालहंसवर्णाश्च भवन्ति पुरुषाधमाः॥ १८८॥

व्याघ्रचक्षुः=व्याघ्रः=हिंस्रकजन्तुः; तन्नेत्रवद् नेत्रे येषां ते नरा धनैर्युक्ताः=द्रव्यैः सम्पन्ना भवन्ति। केकराक्षाः=वक्राक्षाः पुरुषाः, कलिप्रियाः=युद्धप्रियाः, विडालहंसवर्णाश्च=विडालः=मार्जारः, हंसः=पक्षिविशेषः, तद्वद् वर्णो येषां नेत्राणां नराः अधमाः=नीचकार्ये सम्पृक्ता भवन्ति॥ १८८॥

व्याघ्र (बाघ) के समान नेत्र वाले धन से युक्त, केकराक्ष ( वक्र दृष्टि वाले ) लड़ाई में अभिरुचि रखने वाले, विडाल ( बिलाव ) और हंस पक्षी के वर्ण के समान नेत्र वाले पुरुष अधम ( नीच प्रकृति के ) होते हैं॥ १८८॥

मयूरनकुलाक्षाश्च नरास्ते मध्यमाः स्मृताः।
न श्रीस्त्यजति सर्वत्र पुरुषं मधुपिङ्गलम्॥ १८९॥

मयूर-नकुलाक्षाश्च=केकर-नकुलनेत्राश्च ये नराः ते मध्यमाः=मध्यम-स्थितियुक्ताः स्मृताः=आचार्यैः कथिताः। मधुपिङ्गलम्=मधुवत् पिङ्गल-

नेत्रयुक्तं पुरुषं=नरम्, सर्वत्र=सर्वदा, श्रीः=लक्ष्मीः, न त्यजति–एतादृशं पुरुषं त्यक्त्वा लक्ष्मीरन्यत्र न गच्छति ॥ १८९ ॥

मयूर ( मोर ) और नकुल ( नेवले ) के समान नेत्र वाले पुरुष मध्यम स्थिति वाले होते हैं, मधु ( शहद ) के समान पिङ्गल वर्ण के नेत्रों से युक्त पुरुषों को लक्ष्मी कभी नहीं त्यागती ( अर्थात् उनके पास सर्वदा लक्ष्मी बनी रहती ) है ॥ १८९ ॥

**आज्यपिङ्गलनेत्राश्च राजानो भोगसंयुताः ।**
**लोचना हरिताभाश्च गजपिङ्गा धनेश्वराः ॥ १९० ॥**

आज्यं=घृतम् तद्वत् पिङ्गलाः=पीतवर्णनेत्राः नराः भोगसंयुताः=भोग्यपदार्थयुक्ताः, अथवा राजानः=पृथ्वीपालाः; हरिताभाश्च=हरितवर्णाभाश्च गजपिङ्गाः=हस्तिनेत्रवत् पिङ्गाश्च धनेश्वराः=धनस्य स्वामिनो भवन्ति ॥ १९० ॥

घृत के समान पिङ्गलवर्ण ( पीले वर्ण ) नेत्रों वाले भोगी एवं राजा और हाथी के समान पिंगल नेत्रों वाले धन के स्वामी होते हैं ॥ १९० ॥

**बलवन्तो गुणोपेताः पृथिव्यां चक्रवर्तिनः ।**
**तप्तहाटकवर्णाभे भवेतां यस्य लोचने ॥ १९१ ॥**

येषां पुरुषाणां लोचने=उभे नेत्रे, तप्तहाटकवर्णाभे=तप्तस्वर्णवर्णाभे, भवेताम् ते बलवन्तः=पराक्रमवन्तः, गुणोपेताः=समस्तसद्गुणसम्पन्नाः, चक्रवर्तिनः=सार्वभौमराजानो भवन्ति ॥ १९१ ॥

जिन पुरुषों के नेत्र तपे हुए सोने की आभा के समान होते हैं वे बलवान्, गुणों से युक्त, पृथिवी पर चक्रवर्ती राजा होते हैं ॥ १९१ ॥

**नृपतिः स तु विज्ञेयः समुद्रवचनं यथा ॥ १९२ ॥**

स तु नृपतिः=राजा विज्ञेयः=ज्ञातव्यः, यथा=अनेन प्रकारेण समुद्रवचनं=आचार्यसमुद्रस्य वचनमस्ति ॥ १९२ ॥

वह पुरुष राजा होता है—ऐसा आचार्य समुद्र का वचन है ॥ १९२ ॥

### नेत्रस्पन्दनलक्षणम्

**द्विमात्रस्पन्दिनो ये तु धनिनस्ते प्रकीर्तिताः ।**
**त्रिमात्रस्पन्दिनो ज्ञेयाः पुरुषाः सुखजीविनः ॥ १९३ ॥**

द्विमात्रस्पन्दिनः=द्विवारस्पन्दिनः, येषां नेत्रस्य पटलं द्विवारं सहैव उन्मीलितं भवति ते धनिनः=धनयुक्ताः, प्रकीर्तिताः=कथिताः । ये त्रिमात्रस्पन्दिनः पुरुषास्ते सुखजीविनः=सुखेन जीवनयापनं कुर्वाणा ज्ञेयाः ॥ १९३ ॥

नेत्र-स्पन्दन—जिनकी दो बार पलकें गिरती हैं वे धनी होते हैं और जो तीन बार पलक गिराते हैं वे सुखपूर्वक जीने वाले होते हैं ॥ १६३ ॥

**चतुर्मात्रनिमेषश्च धनवान् परिकीर्तितः ।**
**दीर्घायुषो धर्मरताः पञ्चमात्रनिमेषिणः ॥ १६४ ॥**

चतुर्मात्रनिमेषश्च—यः पुरुषः चतुर्वारं पलकं सहैव पातयति सः धनवान्—धनयुक्तः परिकीर्तितः—कथितः । ये पञ्चमात्रनिमेषिणः—पञ्चवारं सहैव पलकं पातयन्ति ते नरा दीर्घायुषः—दीर्घजीविनः, धर्मरताः=धार्मिककार्येषु संलग्नाश्च भवन्ति ॥ १९४ ॥

जो पुरुष एक साथ चार बार पलकें गिराता है वह धनी होता है । और जो पुरुष पांच बार एक साथ पलकों को गिराता है वह दीर्घजीवी एवं धार्मिक कार्य करने वाला होता है ॥ १९४ ॥

भ्रूलक्षणम्

**अभ्युन्नताभिरल्पायुषो विशालोन्नताभिरतिसुखिनः ।**
**विषमभ्रुवो दरिद्रा बालेन्दुनतभ्रुवः साधनाः ॥ १६५ ॥**

सम्प्रति भ्रुवोः लक्षणानि आह—अभ्युन्नताभिः—मध्ये अभित उन्नताभिः भ्रूभिर्युक्ताः पुरुषाः अल्पायुषो भवन्ति । विशालोन्नताभिः अतिसुखिनः—अत्यधिकसुखसौभाग्ययुक्ता भवन्ति । विषमभ्रुवः—न्यूनाधिकभ्रुवो नराः दरिद्रा भवन्ति । बालेन्दुनतभ्रुवः=द्वितीयायाश्चन्द्र इव नम्रा भ्रूः येषां ते सधनाः=धनयुक्ता भवन्ति ॥ १९५ ॥

भ्रू-लक्षण—मध्य में उन्नत भ्रुवों वाले व्यक्ति थोड़ी आयु वाले, पूर्ण उन्नत भ्रुवों वाले पुरुष अत्यधिक सुखी, छोटी बड़ी भ्रुवों वाले पुरुष दरिद्र, द्वितीया के चन्द्रमा के समान नत भ्रुवों वाले धनी होते हैं ॥ १६५ ॥

**दीर्घाऽसंसक्ताभिर्धनिनः खण्डाभिरर्थपरिहीणाः ।**
**मध्यविनतभ्रुवो ये ते सक्ताः स्त्रीष्वगम्यासु ॥ १९६ ॥**

दीर्घाभिः असंसक्ताभिः=अमिलिताभिः, येषां उभौ भ्रुवौ एकस्मिन् न मिलितौ तथा दीर्घौ भवेताम् तर्हि ते नराः धनिनः—धनेन युक्ताः भवन्ति । खण्डाभिः—भ्रूमध्ये पूर्णरूपेण सर्वत्र केशाभाववतीभिः, अर्थपरिहीनाः—अर्थेन—धनेन परिहीणाः=सर्वथारहिता भवन्ति । मध्यविनतभ्रुवः—भ्रुवोः मध्यभागो विनतः—नतो येषां ते पुरुषाः, अगम्यासु=अगमनीयासु स्त्रीषु सक्ता भवन्ति ॥ १९६ ॥

यदि किसी की भौंहे लम्बी हों किन्तु एक में न मिली हों तो ऐसे पुरुष धनी होते हैं। भौंहों में यत्र तत्र बालों के अभाव वाले पुरुष धनरहित होते हैं, भौंह का मध्य भाग नीचा हो तो ऐसे पुरुष अगम्यागमन (सहवास करने के अयोग्य स्त्री के साथ गमन ) करते हैं ॥ १९६ ॥

तथा च समुद्रः—

**अभ्युन्नताभिः स्वल्पायुर्विशालाभिः सुखान्विताः ।**
**मध्योन्नता भ्रुवो ये च पापसक्ताश्च ते नराः ॥ १९७ ॥**

आचार्यः समुद्रोऽपि कथयति—अभ्युन्नताभिः=मध्ये उन्नताभिर्युक्तो नरः, स्वल्पायुः=अल्पायुः भवति। विशालाभिः=बृहतीभिः भ्रूभिः, सुखान्विताः=सुखेन युक्ता भवन्ति। मध्योन्नताः=मध्योन्नता भ्रूः येषां ते नराः=पुरुषाः पापासक्ताश्च=पापकर्मणि सम्पृक्ताः भवन्ति ॥ १९७ ॥

मध्य में उन्नत भौंहों वाले सुखों से युक्त होते हैं, और मध्य भाग में उन्नत भौंहों वाले पापकर्मों में लगे रहते हैं ॥ १९७ ॥

**बालेन्दुभ्रूसमाश्चाढ्या दरिद्रा विषमभ्रुवः ।**
**असंलग्नभ्रुवो ये तु धनिनस्ते नराः स्मृताः ॥ १९८ ॥**

बालेन्दुभ्रूसमाः=बालेन्दुवत् ( वक्रे ) भ्रुवौ समौ येषां ते शुक्लपक्षस्य द्वितीयायाश्चन्द्रकला इव भ्रुवौ येषां ते, ते आढ्याः=धनिनो भवन्ति। विषमभ्रुवः=न्यूनाधिकभ्रुवो नरा दरिद्राः=धनरहिता भवन्ति। असंलग्नभ्रुवः=असंलग्नौ=एकस्मिन् न मिलितौ उभौ भ्रुवौ येषां ते=असंलग्नभ्रुवो नराः धनिनः=धनयुक्ताः, स्मृताः=कथिताः ॥ १९८ ॥

शुक्लपक्ष की द्वितीया के चन्द्र के समान भ्रू वाले धनी होते हैं। छोटी-बड़ी भौंहों वाले पुरुष दरिद्र होते हैं। जिनकी दोनों भौंहें आपस में मिली न हों तो ऐसे पुरुष भी धनी होते हैं ॥ १९८ ॥

**खण्डाभिर्निर्धना ज्ञेया विषमाभिर्नराधमाः ॥ १९८ क ॥**

नराः=पुरुषाः खण्डाभिः=यत्र तत्र रोमाभाववतीभिः भ्रूभिः निर्धनाः=धनरहिताः, विषमाभिः=न्यूनाधिकभ्रूभिः अधमाः=नीचप्रकृतयो भवन्ति ॥

भौंहों में यत्र तत्र बालों के अभाववाले पुरुष निर्धन होते हैं और विषम ( ऊँची-नीची ) भौंहों वाले पुरुष अधम (नीच) होते हैं ॥ १९८ क ॥

## शङ्ख-ललाटलक्षणम्

**उन्नतविपुलैः शङ्खैर्धनिनो निम्नैः सुतार्थसन्त्यक्ताः ।**
**विषमललाटा विधना धनवन्तोऽर्धेन्दुसदृशेन ॥ १९९ ॥**

उन्नतैः, विपुलैः=विस्तीर्णैः, शङ्खैः=ललाटास्थिभिर्युक्ताः पुरुषाः, धनिनः=धनेन समृद्धाः भवन्ति। निम्नैः शंखैः सुतार्थसन्त्यक्ताः=सुतेन=पुत्रेण अर्थेन=धनेन च सन्त्यक्ताः=रहिता भवन्ति। विषमललाटाः=वक्रभाला नराः विधनाः=धनरहिता भवन्ति। अर्धेन्दुसदृशेन=अर्धचन्द्राकारेण ललाटेन=भालेन, धनवन्तः=धनयुक्ता भवन्ति ॥ १९९ ॥

ऊँचे और विस्तीर्ण शङ्ख (ललाटास्थि) वाले व्यक्ति धनी होते हैं, नीचे शंख वाले सुत और धनरहित होते हैं। अर्ध चन्द्रमा के समान ललाट ( मस्तक ) वाले धनवान् होते ॥ १९९ ॥

**शुक्तिविशालैराचार्यता शिरासन्ततैरधर्मरताः।**
**उन्नतसिराभिराढ्याः स्वस्तिकवत् संस्थिताभिश्च ॥ २०० ॥**

शुक्तिविशालैः=येषां ललाटं शुक्तिमिव विशालं भवेत् ते पुरुषाः आचार्यता=आचार्यपदवीं उपदेशकपदवीं प्राप्नुवन्ति। शिरासन्ततैः=बहुशिरायुक्तैः भालैः, अधर्मरताः=अधार्मिककार्येषु पापाचारेषु रताः, उन्नतसिराभिः=उन्नताभिः ऊर्ध्वं गताभिः शिराभिः=नाडीभिः आढ्याः=धनयुक्ताः, स्वस्तिकवत्=स्वस्तिकचिह्नवत् शिरासन्ततयो येषां भाले संस्थिताभिस्ते आढ्याः=धनिनो भवन्ति ॥ २०० ॥

जिसका माथा शुक्ति ( सीपी ) के समान विशाल होता है वह पुरुष आचार्यता (परोपदेश) को प्राप्त करता है। शिराओं ( नाड़ियों ) से युक्त ललाट वाले अधर्म में रत रहते हैं, उन्नत शिरा (ऊपर की ओर शिरा=नाड़ी) वाले धनी होते हैं, स्वस्तिक चिह्न के समान नाड़ियों से युक्त व्यक्ति भी धनी होता है ॥ ( "स्वस्तिकः सर्वतोभद्रोपमः" ) ॥ २०० ॥

**निम्नललाटा बधबन्धभागिनः क्रूरकर्मनिरताश्च।**
**अभ्युन्नतैश्च भूपाः कृपणाः स्युः संवृत्तललाटाः ॥ २०१ ॥**

निम्नललाटाः=निम्नललाटयुक्ताः नराः वधबन्धभागिनः=वधस्य=मृत्योः बन्धस्य=कारागारादिकस्य च भागिनः=उपभोक्तारो भवन्ति। तथा क्रूरकर्मनिरताश्च=भयङ्करकर्मणि सम्पृक्ताश्च भवन्ति। अभ्युन्नतैश्च=उन्नतललाटैश्च नराः भूपाः=राजानो भवन्ति, संवृत्तललाटाः=वर्तुलाकारललाटाः, कृपणाः=प्राणान्तेऽपि स्ववित्तस्य व्ययमसहमानाः स्युः ॥ २०१ ॥

नीचे माथे वाले पुरुष मृत्यु या कारागार आदि बन्धन के भागी और भयंकर क्रूर कर्म करने वाले होते हैं। उन्नत माथे वाले राजा होते हैं, गोल माथे वाले कृपण ( सामने मृत्यु उपस्थित होने पर भी द्रव्य का व्यय न करने वाले ) होते हैं ॥ २०१ ॥

तथा च समुद्रः—

ललाटेनार्धचन्द्रेण भवन्ति पृथिवीश्वराः ।
विपुलेन ललाटेन महाधनयुता स्मृताः ॥ २०२ ॥

समुद्राचार्यः कथयति—अर्धचन्द्रेण=अर्धचन्द्र इव ललाटेन=भालेन नराः पृथिवीश्वराः=पृथ्वीपतयो भवन्ति । विपुलेन=विस्तीर्णेन ललाटेन=भालेन महाधनयुताः=विशेषधनयुक्ताः स्मृताः=कथिताः ॥ २०२ ॥

अर्धचन्द्र के समान मस्तक वाले पुरुष पृथ्वीपति होते हैं । विस्तीर्ण ( चौड़े ) माथे वाले महान धनी होते हैं ॥ २०२ ॥

विषमेणाधमा ज्ञेयाः पापाः मर्त्याः शिराततैः ।
निम्नेन तु ललाटेन क्रूरकर्मरता नराः ॥ २०३ ॥

मर्त्याः=पुरुषाः, विषमेण=असमानेन ललाटेन, अधमाः=नीचाः, ज्ञेयाः=कथिताः । शिराततैः=नाड़ीबहुलैः, पापाः=पापकर्मकर्तारो भवन्ति । निम्नेन ललाटेन क्रूरकर्मरताः=हिंसादिक्रूरकर्मणि सम्पृक्ताः भवन्ति ॥ २०३ ॥

असमान माथे वाले पुरुष नीच, नाड़ियों से युक्त माथे वाले पाप कर्म करने वाले और नीचे माथे वाले भयङ्कर क्रूर कर्म करने वाले होते हैं ॥ २०३ ॥

अभ्युन्नतैश्च भूपाः स्युः संवृत्तैः कृपणाः स्मृताः ॥ २०४॥

अभ्युन्नतैः=पूर्णोन्नतैः ललाटैः, नराः भूपाः=राजानः स्युः, संवृत्तैः=वर्तुलैः ललाटैः, कृपणाः=कथमपि स्वद्रव्यव्ययमसहमानाः स्मृताः=कथिताः ॥ २०४ ॥

पूर्ण उन्नत मस्तक वाले पुरुष राजा, गोल माथे वाले कृपण ( किसी भी स्थिति में अपना द्रव्य खर्चा न करने वाले ) होते हैं ॥ २०४ ॥

रुदितलक्षणम्

रुदितमदीनमनश्रु स्निग्धं च शुभावहं मनुष्याणाम् ।
रूक्षं दीनं प्रचुराश्रु चैव न शुभप्रदं पुंसाम् ॥ २०५ ॥

अदीनम्=दीनतारहितम्, अनश्रु=अश्रुपातरहितं स्निग्धं=स्नेहयुक्तं रुदितम्=रोदनम् शुभावहम्=कल्याणकारि भवति । रूक्षम्=नीरसं मनुष्याणाम्=मानवानाम्, दीनं=दीनतापूर्वकम् प्रचुरासु=विशेषाश्रुपातयुक्तं रुदितं पुंसां=मनुष्याणाम् न शुभप्रदम्=न कल्याणप्रदं भवति ॥ २०५ ॥

रोदन—मनुष्यों के लिये दीनता एवं अश्रुपात रहित स्नेहयुक्त रोदन ( रोना ) कल्याणकारी होता है । रूक्ष ( रुखेपन से युक्त ), दीनतापूर्वक विशेष अश्रुपात के साथ रोना मनुष्यों के लिए कल्याणकारी नहीं होता ॥ २०५ ॥

तथा च समुद्रः--

अदीनाऽनश्रुसहितं स्निग्धं च रुदितं शुभम् ।
रूक्षं दीनं वाष्पयुतं पुरुषाणामनिष्टदम् ॥ २०६ ॥

आचार्यः समुद्रः कथयति--अदीनाश्रुसहितम्=दीनतारहित-अश्रुपात-रहितम्=अश्रुपातसहितं न रोदनं, स्निग्धं=स्नेहिलं रुदितम्=रोदनं मनुष्याणां शुभम्=शुभसूचकम् । रूक्षं=स्निग्धतारहितम्, दीनं=दीनतापूर्णं वाष्पयुतं=अश्रुपातसहितं रोदनं पुरुषाणाम्=मानवानाम्, अनिष्टदम्=न इष्टम्-अभिलषितं ददातीति अनिष्टदस्तत्=अकल्याणकारि भवति ॥ २०६ ॥

आचार्य समुद्र कहते हैं—अदीनतापूर्वक अश्रुपातरहित स्नेहाभियुक्त रोदन कल्याणकारी होता है। स्नेहरहित ( रूक्ष ), दीनतापूर्वक और आँसुओं से युक्त रोदन अभीष्ट कामनाओं का विनाश करता है ( अकल्याणकारी होता है ) ॥२०६॥

## हसितलक्षणम्

हसितं शुभदमकम्पं सनिमीलितलोचनं तु पापस्य ।
दुष्टस्य हसितमसकृत्, सोन्मादस्यासकृत् प्रान्ते ॥ २०७ ॥

अकम्पं=कम्परहितं हसितं=हासः शुभदम्=कल्याणप्रदम् भवति, सनिमीलितलोचनं=नेत्रं निमील्य=अनुद्घाटय हासस्तु पापस्य=पापपुरुषस्य भवति। असकृत्=बारं-बारं हसितं दुष्टस्य=दुष्टपुरुषस्य भवति, प्रान्ते=पश्चात् असकृत्=बहुवारं हसितं सोन्मादस्य=उन्मादयुक्तपुरुषस्य भवति ॥

हास्य—कम्परहित हास कल्याणप्रद होता है, पापी आँखें मींचकर हँसते हैं, दुष्ट का हँसना कई बार होता है। और उन्माद से युक्त ( पागल ) व्यक्ति बारबार हँसते रहते हैं अर्थात् उन्मादी ( पागल ) का हंसना बहुत देर तक एक साथ होता है ॥ २०७ ॥

तथा च समुद्रः--

हसितं कम्परहितं नृपाणामन्यथाऽशुभम् ।
असकृद्दोषयुक्तस्य मीलिताक्षस्य चाशुभम् ॥ २०८ ॥

समुद्राचार्यः कथयति—कम्परहितं=अकम्पं हसितं=हास्यम्, नृपाणाम्=राज्ञां भवति । अन्यथा=कम्पसहितं हसितं अशुभम् । दोषयुक्तस्य=दोषाणां कर्तुः पुरुषस्य हास्यम्, असकृद्=बहुवारं, मीलिताक्षस्य=निमीलिताक्षस्य हास्यं च अशुभम्=अकल्याणकारि भवति ॥ २०८ ॥

समुद्राचार्य कहते हैं कि—राजाओं का हास्य कम्पनरहित होता है, कम्प

सहित हंसना अशुभ होता है। एक साथ बहुत बार हंसने वाले दोषी ( दुष्ट कार्य करने वाले ) होते हैं। आँख मूंदकर हंसना अशुभकारी होता है ॥ २०८ ॥

ललाट-रेखालक्षणम्

**तिस्रो रेखाः शतजीविनां ललाटायताः स्थिता यदि ताः।**
**चतसृभिरवनीशत्वं नवतिश्चायुः समं चाब्दाः ॥ २०९ ॥**

सम्प्रति ललाटे=भाले स्थितानां रेखानां लक्षणानि कथ्यन्ते—ललाटायताः=ललाटे आयताः=विस्तृताः तिस्रो रेखाः शतजीविनां शताब्दपर्यन्तं जीविनां नराणां भवन्ति। चतसृभी रेखाभिः अवनीशत्वं=पृथ्वीपतित्वं प्राप्यते। ताभिर्युक्तो नवतिश्चायुः=नवति( ९० )वर्षपर्यन्तं स जीवति ॥ २०९ ॥

ललाट ( मस्तक ) की रेखाओं के लक्षण कहते हैं—पूर्ण ललाट में तीन रेखाओं वाला जीव सौ ( १०० ) वर्ष पर्यन्त जीता है, चार रेखाओं वाले व्यक्ति राजा होते हैं और वे नब्बे (९०) वर्ष पर्यन्त जीते हैं ॥ २०९ ॥

**विच्छिन्नाभिश्चागम्यगामिनो नवतिरप्यरेखेण।**
**केशान्तोपगताभिर्लेखाभिरशीतिर्वर्षायुः ॥ २१० ॥**

ललाटे विच्छिन्नाभिः=छिन्नाभिः ( त्रुटिताभिः ) रेखाभिः पुरुषा अगम्यगामिनः=न गमनीयाभिः स्त्रीभिः सह सम्बन्धं स्थापयन्ति। अरेखेण=रेखारहितेन ललाटेनापि पुरुषो नवतिः=नवतिवर्ष ( ९० )पर्यन्तं जीवति। केशान्तोपगताभिः=केशपर्यन्तं गताभी रेखाभिर्नरोऽशीति(८०)वर्षायुः=वर्षाणाम् अशीतिं जीवति ॥ २१० ॥

ललाट में कटी हुई रेखाओं वाले पुरुष भी नब्बे (९०) वर्ष जीते हैं और केश पर्यन्त लम्बी रेखाओं वाले पुरुष अस्सी (८०) वर्ष तक जीते हैं ॥ २१० ॥

**पञ्चभिरायुः सप्ततिरेकाग्रावस्थिताभिरपि षष्टिः।**
**बहुरेखेण शतार्धं चत्वारिंशच्च वक्राभिः ॥ २११ ॥**

ललाटे पञ्चभी रेखाभिर्युक्तस्य नरस्य सप्ततिवर्षीयम् आयुः, एकाग्रावस्थिताभिः=एका रेखा अग्रे अवस्थिता भवेत्, अन्या च रेखा समाना, तदा षष्टिः=षष्टि(६०)वर्षीयम् आयुः। बहुरेखेण=बहुरेखायुक्तेन ललाटेन शतार्धम्=पञ्चाशत् (५०) वर्षीयम् आयुः। वक्राभिः रेखाभिः चत्वारिंशत्=चत्वारिंशत् (४०) वर्षीयम् आयुः, भवति ॥ २११ ॥

ललाट में पाँच रेखाओं वाला सत्तर (७०) वर्ष, सभी रेखाओं से आगे एक रेखा गयी हो तो साठ वर्ष, बहुत सी रेखाओं से पचास (५०) वर्ष तथा वक्र ( टेढ़ी ) रेखाओं से चालीस वर्ष (४०) की आयु वाला होता है ॥ २११ ॥

भ्रूलग्नाभिस्त्रिंशद् विंशतिको वामभागवक्राभिः ।
क्षुद्राभिः स्वल्पायुर्न्यूनाभिश्चान्तरे कल्प्यम् ॥ २१२ ॥

वामभागवक्राभिः भ्रूलग्नाभी रेखाभिः त्रिंशद्वर्षीयम् आयुः, अथवा विंशतिकः-विंशतिवर्षीयायुष्मान् भवति । क्षुद्राभिः-ह्रस्वरेखाभिः स्वल्पायुः भवति, न्यूनाभिः-अतीव ह्रस्वरेखाभिश्च, अन्तरे-क्रमशः, त्रिंशद् वर्षेभ्यो न्यूनं पञ्चविंशतिः, ततो न्यून्यं तर्हि विंशतिः, ततो न्यूनम्=एवं न्यूनाभिः पञ्चदशादि आयुः कल्प्यम्=विचारणीयम् ॥ २१२ ॥

बाईं ओर झुकी हुई रेखाओं से (३०) वर्ष या २० वर्ष की आयु समझनी चाहिए । क्रमशः क्षुद्र और छोटी होती रेखाओं द्वारा क्रमशः पचीस, बीस, पन्द्रह और दस वर्ष की आयु का विचार करना चाहिए ॥ २१२ ॥

तथा च समुद्रः—

रेखाः पञ्च ललाटे तु यस्याऽसौ धनवान् स्मृतः ।
शतं जीवति वर्षाणामैश्वर्यमधिगच्छति ॥ २१३ ॥

समुद्रः कथयति—यस्य पुरुषस्य ललाटे पञ्च रेखा भवन्ति, असौ=नरो धनवान्=धनेन सम्पन्नः स्मृतः=कथितः । स वर्षाणां शतं जीवति । ऐश्वर्यम् अधिगच्छति=ऐश्वर्यं चापि लभते ॥ २१३ ॥

जिस पुरुष के माथे में पांच (५) रेखा होती हैं वह धनवान् और ऐश्वर्य से सम्पन्न होकर सौ वर्ष (१००) पर्यन्त जीता है ॥ २१३ ॥

चतूरेखो ह्यशीतिस्तु त्रिभिः सप्ततिरेव च ।
षष्टिर्द्वाभ्यां तु रेखाभ्यां चत्वारिंशत् तथैकया ॥ २१४ ॥

चतस्रो रेखा यस्य सः, अशीतिः-अशीतिवर्षं पर्यन्तं जीवति, त्रिभी रेखाभिः सप्ततिवर्षपर्यन्तं जीवति, द्वाभ्यां रेखाभ्यां षष्टिवर्षपर्यन्तं जीवति, तथा एकया रेखया चत्वारिंशद्वर्षपर्यन्तं जीवति ॥ २१४ ॥

ललाट में चार रेखा वाले पुरुष अस्सी (८०) वर्ष जते हैं, तीन रेखा वाले सत्तर वर्ष पर्यन्त जीते हैं, दो रेखा वाले साठ वर्ष पर्यन्त जीते हैं और एक रेखा वाले चालीस (४०) वर्ष तक जीते हैं ॥ २१४ ॥

अरेखेण ललाटेन भवन्ति निधिपालकाः ।
रेखाच्छेदे तु विज्ञेयाः पापकर्मरता नराः ॥ २१५ ॥

अरेखेण=रेखारहितेन ललाटेन निधिपालकाः=धनधान्यादिसमस्तैश्वर्य-सम्पन्ना भवन्ति । रेखाच्छेदे-छिन्नभिन्नरेखायक्तेन ललाटेन नराः, पाप-कर्मरताः-पापकर्मणि संलग्नाः, विज्ञेयाः-ज्ञातव्याः ॥ २१५ ॥

रेखा रहित ललाट वाले समस्त प्रकार के ऐश्वर्यों के सहित बड़े धनी होते हैं। तथा छिन्न-भिन्न रेखा वाले पापकर्म करने वाले होते हैं ॥ २१५ ॥

**अल्पायुषस्तथाऽल्पासु व्याधियुक्ताश्च ते सदा ॥ २१६ ॥**

अल्पासु-लघुरेखासु सतीषु ते मनुष्याः सदा अल्पायुषः=स्वल्पायुषः, तथा व्याधियुक्ताश्च रोगादिविविधदुःखयुक्ताश्चः भवन्ति ॥ २१६ ॥

ललाट में छोटी रेखा वाले पुरुष थोड़ी आयु वाले तथा नाना प्रकार के रोगादिकों से पीड़ित होते हैं ॥ २१६ ॥

**त्रिशूलं पट्टिशं वापि ललाटे यस्य दृश्यते ।**
**ऐश्वर्यं तस्य विज्ञेयं सेनानां नायकश्च सः ॥ २१७ ॥**

यस्य-पुरुषस्य, ललाटे त्रिशूलं-त्रिशूलस्य आकृतिः पट्टिशम्=चतुष्कोणात्मकं चिह्नं दृश्यते=अवलोक्यते, तस्य ऐश्वर्यं विज्ञेयम्। स एतादृशः पुरुषः सेनानां नायकश्च भवति ॥ २१७ ॥

जिस पुरुष के मस्तक पर त्रिशूल चिह्न अथवा पट्टिश ( चार कोनों वाला चिह्न ) दिखायी पड़े तो उसे ऐश्वर्ययुक्त एवं सेनानायक समझना चाहिए ॥ २१७ ॥

शिरोलक्षणम्

**परिमण्डलैर्गवाढ्याः छत्राकारैः शिरोभिरवनीशाः ।**
**चिपिटैः पितृमातृघ्नाः करोटिशिरसां चिरान्मृत्युः ॥ २१८ ॥**

मूर्ध्नो लक्षणमुच्यते-परिमण्डलैः=वर्तुलाकारैः शिरोभिः, पुरुषाः गवाढ्याः=बहुपशुभिः परिवृता भवन्ति, छत्राकारैः=आतपत्राणामाकारैः शिरोभिः, अवनीशः पृथ्वीपतिर्भवति। चिपिटैः शिरोभिः पितृमातृघ्नाः=मातृपितृघातकाः भवन्ति, करोटिशिरसां-अस्थियुक्तशिरसां चिरात्-बहुकालात्=मृत्युः भवति। ( शिरसि अस्थ्नां स्पष्टरूपेण दर्शनं येषां तेषां दीर्घमायुः भवति ॥ २१८ ॥

गोल शिरवाले बहुत गोधन से युक्त होते हैं। छाते के समान शिर वाले पृथ्वीपति ( राजा ) होते हैं, चिपटे शिर वाले माता पिता के घातक होते हैं अर्थात् मातृ-पितृ-सुख से शीघ्र वञ्चित हो जाते हैं। अस्थियों से युक्त अर्थात् जिनके सिर में हड्डियाँ दिखाई दे, वे दीर्घ आयु प्राप्त करने के बाद मृत्यु को प्राप्त होते हैं ॥ २१८ ॥

**[1]घटमूर्धाऽध्वरुचिर्द्विमस्तकः पापकृद् धनैस्त्यक्तः ।**
**निम्नं तु शिरो महतां बहुनिम्नमनर्थदं भवति ॥ २१९ ॥**

---

१. "घटमूर्धाध्वम्नगरुचिः" इति पाठ भेदः । अध्वनि=मार्गे अनरुचिः ( न रुचिः ) यस्य सः। मार्ग में रुचि नहीं रखते।

घटमूर्धा=घटः=कलश इव मूर्धा यस्य सः, अध्वरुचिः=अध्वनि=मार्गे रुचिः यस्य सः=मार्गेरुचिः=गमनागमनप्रियः। द्विमस्तकः=शिरोद्वयं प्रतिभाति यस्य पुरुषस्य स पापकृत्=पापकर्मकर्ता, तथा धनैस्त्यक्तः=धनरहितो भवति। निम्नं=नतं शिरः=मूर्धा, महताम्=महापुरुषाणां भवति। बहु निम्नम्=अधिकं निम्नं शिरः, अनर्थदम्=सङ्कटप्रदं भवति ॥ २१९ ॥

कलश के समान शिर वाले मार्ग ( यात्रा ) में रुचि रखते हैं ( अर्थात् यात्रा अधिक किया करते हैं )। दो शिर के समान शिर वाले पापी और धनरहित होते हैं, महापुरुषों का शिर साधारणतः निम्न ( नीचा ) होता है; परन्तु अत्यन्त नीचा मस्तक अनर्थों ( संकटों ) को देने वाला होता है ॥ २१६ ॥

तथा च समुद्रः--

**उत्क्रान्तिदो निम्नशिरः अल्पोपहत एव च।**
**छत्राकारशिरा राजा गवाढ्यः परिमण्डलः॥**
**विषमं तु दरिद्राणां शिरो दीर्घं चिरायुषाम् ॥ २२० ॥**

समुद्राचार्येण शिरोलक्षणमुच्यते—निम्नशिरः उत्क्रान्तिदः=अनर्थदः, तथा अल्पोपहतः=अल्पमृत्युद एव च, छत्राकारशिराः पुरुषो राजा भवति। परिमण्डलः=वृत्ताकारशिराः गवाढ्यः=अत्यधिकेन पशुधनेन युक्तो भवति। दरिद्राणां पुरुषाणां शिरस्तु विषमम्=असमानं भवति। चिरायुषाम्=दीर्घजीविनां शिरो दीर्घं भवति ॥ २२० ॥

नीचा सिर अनर्थों (संकटों) को और अल्पमृत्यु को देता है, छत्र के समान सिर राजा बनाता है, गोल सिर बहुत पशुधन देता है। दरिद्रों का सिर विषम असमान होता है, लम्बा सिर दीर्घजीवियों का होता है ॥ २२० ॥

**नागकुम्भशिरा राजा समं सर्वत्र भोगिनः ॥ २२० क ॥**

नागः=गजः तस्य कुम्भवत् शिरोयुक्तः पुरुषो राजा भवति। सर्वत्र समं शिरो भोगिनः=सौभाग्यवतः पुरुषस्य भवति ॥ २२० क ॥

हाथी के कुम्भ के समान सिर वाला राजा होता है। बराबर सिर वाले सर्वत्र भोगी होते हैं ॥ २२० क ॥

## केशलक्षणानि

अधुना मूर्धजलक्षणमाह—

**एकैकभवैः स्निग्धैः कृष्णैराकुञ्चितैरभिन्नाग्रैः।**
**मृदुभिर्न चाति बहुभिः केशैः सुखभाक् नरेन्द्रो वा ॥ २२१ ॥**

अधुना=सम्प्रति, मूर्धजानां शिरःस्थितकेशानां लक्षणं कथ्यते—एकैकं=प्रतिरोमकूपं पृथक् पृथक् भवः=उत्पत्तिः येषां तैः, स्निग्धैः=चिक्कणैः, कृष्णैः=श्यामैः, आकुञ्चितैः=अग्रभागेन कुञ्चितैः, अभिन्नाग्रैः=न भिन्नो तेषां तैः अभिन्नैः-अधिकैः, अग्रभागैः, मृदुभिः=कोमलैः, न चातिबहुभिः=नातिघनैः, एतादृशैः केशैः, पुरुषः सुखभाक्=सुखस्य भोक्ता, वा=अथवा, नरेन्द्रः=राजा भवति ॥ २२१ ॥

जिस पुरुष के सिर में एक रोमकूप में एक-एक ही बाल हों, स्निग्ध, काले अग्रभाग कुण्डली के समान झुके हुए हों, अग्रभाग भेद को न प्राप्त हों, कोमल और अधिक घने न हों तो वह पुरुष सुखी अथवा राजा होता है ॥ २२१ ॥

**बहुमूलविषमकपिलाः स्थूलस्फुटिताग्रपरुषह्रस्वाश्च ।**
**अतिकुटिलाश्चातिघनाश्चातिमूर्धजा वित्तहीनानाम् ॥ २२२ ॥**

वित्तहीनानाम्=धनहीनानाम् पुरुषाणाम्, एकैकरोमकूपे बहवो मूर्धजाः=केशाः विषमाः=न समाः, कपिला=धूम्रसदृशाः, स्थूलाः=स्फुटिताग्राः, परुषाः=कठोराः, ह्रस्वाश्च=न लम्बायमानाः, अतिकुटिलाः=अत्यधिककुञ्चिताः, अतिघनाः=अत्यन्तघना भवन्ति ॥ २२२ ॥

धनहीन पुरुषों के शिर के बाल एक रोमकूपों में बहुत होते हैं तथा वे समान नहीं होते । कपिल ( धूमिल रंग के ), मोटे अग्रभाग स्फुटित, कठोर, छोटे और अत्यधिक आकुञ्चित ( कुण्डलों वाले ) तथा घने होते हैं ॥ २२२ ॥

तथा च समुद्रः—

**एकैक-सम्भवाः स्निग्धाः कृष्णा नातिघनाः कचाः ।**
**पूजिताः, विपरीताश्च निर्धनानां प्रकीर्तिताः ॥ २२३ ॥**

समुद्राचार्यः कथयति—एकैकसम्भवाः=एकैक-रोमकूपेषु एकैका एव केशाः, स्निग्धाः=चिक्कणाः, कृष्णाः=श्यामवर्णाः, नातिघनाः कचाः=केशाः, पूजिताः=प्रशस्ताः, सुखयुक्तानां कथिताः । विपरीताः=एकस्मिन् कूपे बहवः केशा रूक्षा अकृष्णा अतिघनाः कचाः, निर्धनानां धनरहितानां प्रकीर्तिताः=कथिताः ॥ २२३ ॥

धनसम्पन्न व्यक्तियों के एक रोमकूप में एक ही केश उत्पन्न होता है । स्निग्ध, काले और विरल बाल पूजित होते हैं अर्थात् सुखी पुरुषों के होते है । इसके विपरीत एक कूप में अधिक बाल रूखे, काले, विरल आदि केश निर्धनों के होते हैं—ऐसा समुद्राचार्य का मत है ॥ २२३ ॥

## उपसंहारः

तथा च गर्गः—

**चतुर्दशसमद्वन्द्वश्चतुःकृष्णश्चतुःसमः।**
**दशपद्मो दशबृहत् त्रिशुक्लः शस्यते नरः॥ २२४॥**

गर्गाचार्यः कथयति—चतुर्दश समाः अङ्गद्वन्द्वाः यस्मिन् सः समद्वन्द्वः, चतुः-कृष्णः, चतुःसमः, दशपद्मः=दशङ्गानि पद्माकृतीनि यस्य सः, दश बृहत्=दशाङ्गानि बृहत्=विस्तृतानि यस्य सः, त्रिशुक्लः=त्रयोऽवयवाः उज्ज्वलाः यस्य नरस्य सन्ति तर्हि सः शस्यते=प्रशस्यते, श्रेष्ठः पुरुषः कथ्यते॥ २२४॥

जिस मनुष्य के शरीर में चौदह ( १४ ) अंग जो कि दो-दो के जोड़े में होते हैं बराबर, चार ( ४ ) अंग काले, चार ( ४ ) अंग समान, दश ( १० ) अंग कमल के समान, दश ( १० ) अंग विस्तारयुक्त और तीन ( ३ ) अंग उज्ज्वल हों वह श्रेष्ठ पुरुष होता है॥ २२४।

**पादौ गुल्फौ स्फिचौ पार्श्ववृषणौ चक्षुषी स्तनौ।**
**कण्ठोष्ठौ वंक्षणौ जंघे हस्तौ बाहू च कुक्षिकौ॥ २२५॥**
**चतुर्दशसमद्वन्द्वं समुद्रो नृषु शंसति॥**

उपरितनं श्लोकमेवाध्यायान्तं विवृणोति—१. पादौ=चरणौ, २. गुल्फौ, ३. स्फिचौ, ४. पार्श्वौ=पार्श्वभागौ, ५. वृषणौ=अण्डकोशौ, ६. चक्षुषी=नेत्रे, ७. स्तनौ, ८. कण्ठः=कण्ठस्य उभावपि पार्श्वौ, ९. ओष्ठौ, १०. वंक्षणौ=जान्वोः सन्धी, ११. जंघे, १२. हस्तौ, १३. बाहू, १४. कुक्षिकौ=कुक्षी—इमानि चतुर्दश अङ्गानि द्वन्द्वरूपेण समानि यस्मिन् सः तम्, नृषु-पुरुषेषु समुद्राचार्यः शंसति=श्रेष्ठं पुरुषं कथयति॥ २२५॥

अब ऊपर कहे (चतुर्दश…नर)श्लोक की ग्रन्थकार विस्तार से व्याख्या करते हैं—दोनों पैर, दोनों गुल्फ, दोनों स्फिक् ( दोनों पुट्ठों के मांसपिंड ), दोनों पार्श्वभाग, दोनों अण्डकोश, दोनों नेत्र, दोनों स्तन, कण्ठ के दोनों पार्श्वभाग, दोनों ओंठ, दोनों जानुओं की सन्धियाँ, दोनों जाँघ, दोनों हाथ, दोनों बाँहें, दोनों काँख—ये १४ अंग बराबर हों तो वे पुरुष के लिये कल्याणप्रद होते हैं—ऐसा समुद्राचार्य कहते हैं॥ २२५॥

**अक्षितारे भ्रुवौ श्मश्रुः केशाश्चैवासिताः शुभाः॥ २२६॥**

अक्षितारे=नेत्रस्य उभावपि तारे ( कृष्णतारके इत्यर्थः ), भ्रुवौ=उभावपि भ्रुवौ, श्मश्रुः, कपोल-चिबुकस्योपरि उद्भूतकेशाः, केशाः=मूर्धजाः, असिताः=कृष्णवर्णाः शुभावहाः॥ २२६॥

नेत्रों की पुतली, भौंहे, दाढी, शिर के बाल--ये चार काले ही शुभ होते हैं ॥ २२६ ॥

**अङ्गुल्यो हृदयं नेत्रे दशनाश्च समा नृणाम् ।**
**चत्वारः सम्प्रशस्यन्ते मदैश्वर्यसुखावहाः ॥ २२७ ॥**

अङ्गुल्यः, हृदयम्, नेत्रे, दशनाः-इति चत्वारोऽवयवाः नृणां समाः=समानाङ्गाः, मदैश्वर्यसुखावहाः-मदः-हर्षातिरेकः, ऐश्वर्यम्-शासनकर्तृत्वम्, सुखं-क्लेशाभावः, एतेषाम् आवहाः=प्राप्तिसूचकाः सम्प्रशस्यन्ते ॥ २२७ ॥

अंगुलियाँ, हृदय, नेत्र, दाँत--ये चार अंग बराबर हों तो ये मनुष्य को प्रमोद ( हर्ष ), ऐश्वर्य और सुख देने वाले होते हैं ॥ २२७ ॥

**जिह्वोष्ठं तालुरास्यं च मुखं नेत्रे स्तनौ नखाः ।**
**हस्तौ पादौ च शस्यन्ते पद्माभा दश देहिनाम् ॥ २२८ ॥**

१. जिह्वा, २. ओष्ठम्, ३. तालुः-मुखस्य मध्ये उपरि तालु भवति, आस्यम्,-येनान्नं भुज्यते, ५. मुखम्=गलादिसप्ताङ्गकवदनम्, ६. नेत्रे, ७. स्तनौ, ८. नखाः, ९. हस्तौ, १०. पादौ एते दश अवयवा देहिनां पद्माभाः-कमलोपमकान्तियुक्ताः, शस्यन्ते-प्रशस्यन्ते ॥ २२८ ॥

जिह्वा=जीभ, ओष्ठ, तालु, आस्य=मुख, का भीतरी भाग, मुख ( गला आदि सात अंगों सहित वदन ) नेत्र, स्तन, नख, हाथ और पैर—ये दश अंग मनुष्यों के कमल के समान आभावाले श्रेष्ठ कहे गये हैं ॥ २२८ ॥

**पाणिपादमुरो ग्रीवा वृषणौ हृदयं शिरः ।**
**ललाटमुदरं पृष्ठं बृहन्तः पूजिता दश ॥ २२९ ॥**

१. पाणिः-करः, २. पादम्=चरणम्, ३. उरः-वक्षस्थलम्, ४. ग्रीवा, ५. वृषणौ-अण्डकोषौ, ६. हृदयम्, ७. शिरः-मूर्धा, ८. ललाटम्=भालः, ९. उदरम्, १०. पृष्ठम्—इमे दश अवयवाः बृहन्तः-विस्तारयुक्ताः, पूजिताः ॥

हाथ पैर, वक्षःस्थल, ग्रीवा, अण्डकोश, हृदय शिर, मस्तक, उदर, पृष्ठ (पीठ)-ये दश अंग मनुष्य के विस्तारयुक्त ( बड़े ) ही शुभ होते हैं ॥ २२९ ॥

**नेत्रे ताराविरहिते दशनाश्च सिताः शुभाः ।**
**एतच्च लक्षणं कृत्स्नं नराणां समुदाहृतम् ॥ २३० ॥**

नेत्रे-उभे चक्षुषी, तारा-पुत्तलिका ताभ्यां विरहिते रहिते, दशनाश्च-दन्ताश्च सिताः-उज्ज्वलाः शुभाः--शुभं कुर्वन्ति, एतत्-एतावन्मात्रं लक्षणं कृत्स्नं-सम्पूर्णं नराणां-मानवानां समुदाहृतम्-साधुप्रकारेण कथितम् ॥२३०॥

ताराहीन नेत्र और श्वेत दाँत शुभकारी होते हैं । ये सब लक्षण विद्वानों द्वारा पूर्णपुरुषों के कहे गये हैं ॥ २३० ॥

# वनितांगानां लक्षणविशेषः

स्कन्द उवाच—

सदा गृही सुखं भुंक्ते यदि स्त्री लक्षणैर्युतः।
अतः सुखसमृद्धयर्थमादौ लक्षणमीक्षयेत् ॥ १ ॥

स्कन्दः-भगवतः शिवस्य पुत्रः, उक्तवान्—यदि ( गृहस्थस्य ) स्त्री-पत्नी, लक्षणैर्युता--शोभनलक्षणयुक्ता, तर्हि गृही-गृहस्य स्वामी, सदा-सर्वदा सुखम्-आनन्दं भुंक्ते=अनुभवति, सुखी भवति। (अन्यथा दुःखी भवति।) अतः=एतत्कारणात्, आदौ=प्रथमतः, सुखसमृद्धयर्थम्-सुखसमृद्धिप्राप्त्यर्थं स्त्रीणां लक्षणं=शुभाशुभलक्षणम्, ईक्षयेत्-अवलोकयेत् ॥ १ ॥

स्कन्द ( स्वामी कार्तिक ) जी बोले—यदि गृहस्वामी की स्त्री शुभ लक्षणों से युक्त हो तो वह सर्वदा सुखों का भोग करता है। और यदि उसकी स्त्री अशुभ लक्षणवाली हो तो दुःख का अनुभव करता है। इसलिये सुखसमृद्धि के लिए सर्वप्रथम स्त्रीलक्षण समझने चाहिये ॥ १ ॥

स्त्रीलक्षण-भूमिका

वपुरावर्तगन्धाश्च छाया सत्वं स्वरो मतिः।
वर्णश्चेदष्टधा प्रोक्ता बुधैर्लक्षणभूमिका ॥ २ ॥

वपुः=शरीरम्, आवर्तश्च=भ्रमरश्च, गन्धश्च-स्वेदादिकस्य गन्धश्च, छाया-शरीरस्य प्रतिकृतिः, सत्त्वम्-प्रकाशको गुणः, स्वरः-वर्णोच्चारणयत्न-विशेषः, गतिः-गमनम्, वर्णः=आकृतिः-ब्राह्मणादिभेदकः, इमा अष्टधा, बुधैः-विद्वद्वर्यैः आचार्यैः, लक्षणभूमिका-लक्षणम्=लक्ष्यमात्रव्यापको धर्मः, तस्य भूमिका-वक्तव्यविषयकसूचना, प्रोक्ता=कथिता ॥ २ ॥

१. शरीर, २. आवर्त=भ्रमर आदि, ३. स्वेद ( पसीना ) आदि की गन्ध, ४. छाया ( शरीर की प्रतिकृति-परछाई ), ५. सत्त्व ( जो कि आन्तरिक प्रकाशक गुण है ), ६. स्वर ( आवाज ), ७. गति ( चाल ), ८. वर्ण ( आकृति )—इन आठ प्रकारों से विद्वानों ने स्त्री-लक्षणों की भूमिका कही है ॥ २ ॥

आपादतलमारभ्य यावन्मौलिरुहं क्रमात्।
शुभाशुभानि वक्ष्यामि लक्षणानि मुने! श्रृणु ॥ ३ ॥

स्कन्दः कथयति—हे अगस्त्यमुने! आपादतलमारभ्य-चरणस्य अधो-भागादारभ्य मौलिरुहम्-शिरःस्थितकेशं यावत्=पर्यन्तम्, क्रमात्-क्रम-

पूर्वकम्, शुभाशुभानि=शुभानि–कल्याणप्रदलक्षणानि, अशुभानि–कष्टप्रदानि लक्षणानि=स्वरूपाणि, शृणु=आकर्णय ॥ ३ ॥

स्कन्द जी अगस्त्यमुनि से कहते हैं कि—मैं ( स्त्री के ) पैर के तलवे से लेकर शिर के केशों तक सभी अंगों के क्रमशः शुभ-अशुभसूचक लक्षण बताता हूँ, हे मुनि ! आप सुनें ॥ ३ ॥

**आदौ पादतलं रेखास्ततोऽङ्गुष्ठांगुलीनखाः ।**
**पृष्ठ गुल्फद्वयं पार्ष्णिजंघे रोमाणि जानुनी ॥ ४ ॥**

आदौ=प्रथमतः पादतलम्=चरणस्य अधोभागस्थित तलम्, ( तस्य ) रेखाः–चिह्नानि, ततः अङ्गुष्ठस्य अंगुलीनां रेखाश्च, ततोः नखाः–नखस्य लक्षणानि, ततः पादपृष्ठम्, ततः गुल्फद्वयम्, ततः पार्ष्णिः, ततो जंघे, ततो रोमाणि, ततो जानुनी—इत्येवं क्रमशो लक्षण–निरूपणपूर्वकं निरूप्यन्ते ॥४॥

पादतल, फिर अंगूठे, अंगुलियों, नखों ( नाखूनों ), पादपृष्ठों, गुल्फों, पार्ष्णि ( दोनों पार्श्व, ) जंघा, रोम तथा जानुओं की ( रेखादिकों के क्रमशः लक्षण कहूँगा ) ॥ ४ ॥

**ऊरुकटिनितम्बस्फिग् भगो जघनवस्तिके ।**
**नाभिः कुक्षिद्वयं पार्श्वोदरमध्यवलित्रयम् ॥ ५ ॥**

( पुनः ) ऊरु, कटी, नितम्बः, स्फिक्, भगः, जघनम्, बस्तिः, नाभिः, कुक्षिद्वयं, पार्श्वम्, उदरम्, मध्यं वलित्रयम्=उदरमध्यस्थितवलित्रयम्–एतेषां अंगानां क्रमशः लक्षणानि कथयिष्यामि ॥ ५ ॥

फिर ऊरु, कटी ( कमर ), नितम्ब, स्फिक् ( कटि के मांसपिण्ड ), योनि, जंघा, नाभि, बस्तिप्रदेश ( बस्ति नाभि के नीचे होती है ), दोनों कुक्षि ( काँख ), दोनों पार्श्वभाग और पेट के मध्य स्थित वलियों के ( लक्षण कहेंगे ) ॥ ५ ॥

**रोमाली हृदयं वक्षो वक्षोजद्वयचूचुकम् ।**
**जत्रु स्कन्धांसकक्षो दोर्मणिबन्धकरद्वयम् ॥ ६ ॥**

( पुनः ) रोमाली–रोमपंक्तिः, हृदयं ( वक्षःस्थलस्यान्तःस्थो भागः ) वक्षः–वक्षःस्थलं, वक्षोजद्वयं–स्तनद्वयं, चूचुकम्–स्तनयोः अग्रिमौ भागौ तस्य, जत्रु=स्कन्धकक्षयोः सन्धिभागः; स्कन्धस्य, अंशस्य, कक्षस्य, दोः=भुजद्वयम्, मणिबन्धः, करद्वयम्–हस्तद्वयं च निरूप्यन्ते ॥ ६ ॥

( पुनः ) रोमपंक्ति, हृदय, छाती, दोनों स्तन, दोनों कुचाग्र, भग, जत्रु ( स्कन्ध और कक्ष की सन्धि ), स्कन्ध, अंश, भुजा, मणिबन्ध और दोनों हाथों के ( लक्षण कहे जायँगें ) ॥ ६ ॥

पाणिपृष्ठं पाणितलं रेखाङ्गुष्ठांगुली-नखाः ।
पृष्टिः कृकाटिका-कंठ चिबुकं च हनुद्वयम् ॥ ७ ॥

( पुनः ) पाणिपृष्ठम्=करतलस्योपरिभागः, पाणितलम्=पाणितलस्य रेखाणां लक्षणम्, अङ्गुष्ठः, अंगुलयः, नखाः—एतेषां लक्षणम्, पृष्टिः=कृकाटिका='घाँटी' इति हिन्दीभाषायाम्, चिबुकं, हनुद्वयं च—एतेषां अङ्गानां लक्षणानि कथयिष्यामि ॥ ७ ॥

( फिर ) हाथों के पृष्ठभाग, हथेली, अंगूठा, अंगुली नख, पीठ, घाटी ( गर्दन के ऊपर वाला भाग ), कण्ठ, चिबुक और हनु ( ठुड्डी ) के ( लक्षण कहेंगे ) ॥ ७ ॥

कपोलौ वक्त्रमधरोत्तरोष्ठां द्विज-जिह्विका ।
घटिका तालु हसितं नासिका क्षुतमक्षिणी ॥ ८ ॥

कपोलौ=गण्डस्थलौ वक्त्रं=आस्यम्, अधरोष्ठः, उत्तरोष्ठश्च द्विजाः= दन्ताः, जिह्विकाः=जिह्वा, घंटिका, तालुः, हसितं=हास्यम्, नासिकायाः, क्षुतम्=छिक्कायाः, अक्षिणी=नेत्रयोः लक्षणानि कथयिष्यन्ते ॥ ८ ॥

(तदनन्तर) गाल, मुख, अधरोष्ठ, उत्तरोष्ठ, दांत, जिह्वा, घंटिका ( घांटी ) तालु, हास्य नासिका, छींक, और नेत्र के ( लक्षण कहेंगे ) ॥ ८ ॥

### योषितः शुभाङ्गानां सङ्ख्या

पक्ष्मभ्रूकर्णभालानि मौलिसीमन्तमौलिजाः ।
षष्टिषडुत्तरा योषिदंगलक्षणसत्खनिः ॥ ९ ॥

पक्ष्माणि, भ्रुवौ, कर्णौ, भालम्, मौलिः=शिरः, सीमन्तम्=सिन्दूराधारस्थानम्, मौलिजाः=शिरोरुहाः, षष्टिषडुत्तरा=षट्षष्टिसंख्याकानां योषिदङ्गानां सत्खनिः=श्रेष्ठभूमिः, शास्त्रकारैरुक्ता, तेषां लक्षणानि कथ्यन्ते ॥९॥

पलक, भौंह, कान, माथा, शिर, शिर के बाल और सिन्दूर लगाने का स्थान, ये छांछठ ( ६६ ) अंग स्त्रियों के श्रेष्ठ स्थान कहे हैं, उनके लक्षण कहेंगे ॥ ९ ॥

### वनिताङ्गानां लक्षणानि

#### १. पादतलम्

स्त्रीणां पादतलं स्निग्धं मांसलं मृदुलं समम् ।
अस्वेदमुष्णमरुणं बहुभोगोचितं स्मृतम् ॥ १० ॥

स्त्रीणाम्=नारीणां पादतलम्=चरणस्याधोभागः, स्निग्धम्=स्नेहिलम्, मृदुलम्=कोमलम्, समम्=उभयोः पादयोर्मध्ये वैषम्याभावम् ( समानम् ),

अस्वेदम्–स्वेदरहितम्, उष्णम्=स्पर्शकरणे उष्णतासहितम्, अरुणम्–रक्तवर्णम्, बहुभोगोचितम्=विविधप्रकाराणां भोगानाम्, उचितम्–बहुभोगसामग्रीप्रदाने समर्थम्, स्मृतम्–शास्त्रकारैः कथितम् ॥ १० ॥

पादतल—स्त्रियों के पैर के तलवे स्निग्ध, मांसयुक्त, कोमल, समतल, पसीने से रहित, उष्ण और लालवर्ण के होने पर विविध प्रकार के भोगों के लिए योग्य होते हैं। (अर्थात् उक्त लक्षण से युक्त पादतल वाली स्त्री नाना प्रकार के भोगों को प्राप्त करती है) ॥ १० ॥

रूक्षं विवर्णं परुषं खण्डितं प्रतिबिम्बकम्।
शूर्पाकारं विशुष्कं च दुःखदौर्भाग्यसूचकम् ॥ ११ ॥

रूक्षम्=शुष्कं, विवर्णम्=मलिनम्, परुषम्–कठोरम्, खण्डितम्–त्रुटितम्, प्रतिबिम्बकम्–बालुकादिस्थानेषु खण्डितप्रतिबिम्बकम्, शूर्पाकारम्=शूर्पमिव अग्रभागे विस्तारयुक्तम्, विशुष्कम्–विशेषरूपेण नीरसं च पादतल्पम्, दुःखदौर्भाग्यसूचकम्–दुःखस्य=कष्टस्य, दौर्भाग्यस्य=दुःखभाग्यस्य च सूचकम्–संकेतदम् (शास्त्राचार्यैः कथितम्) ॥ ११ ॥

रूखे, अशोभित, कठोर और बालुकादि स्थानों में खंडित प्रतिबिम्ब वाले, शूर्पाकार (शूर्प के समान अग्र भाग चौड़े वाले), विशेष सूखे जैसे प्रतीत होने वाले पैर दुःख और दौर्भाग्य के सूचक होते हैं ॥ ११ ॥

चक्र-स्वस्तिक-शङ्खाब्ज-ध्वज-मीनाऽऽतपत्रवत् ।
यस्याः पादतले रेखा सा भवेत् क्षितिपाङ्गना ॥ १२ ॥

यस्याः=नार्याः, पादतले, चक्रस्य, स्वस्तिकचिह्नस्य, शङ्खस्य, अब्जस्य–कमलस्य, ध्वजस्य=पताकायाः, मीनस्य=मत्स्यस्य, आतपत्रस्य=छत्रस्येव च रेखा भवेत् सा नारी क्षितिपाङ्गना=क्षितिपस्य=पृथ्वीपतेः, अङ्गना=पत्नी राज्ञी भवति ॥ १२ ॥

जिस नारी के पादतल में चक्र, स्वस्तिक, शंख, कमल, पताका, मछली और छत्राकार चिह्न हों तो वह रानी होती है ॥ १२ ॥

भवेदखण्डभोगा योर्ध्वमध्यांगुलिसंयुता ।
रेखाऽऽखुसर्पकाकाभा दुखदारिद्र्यसूचिका ॥ १३ ॥

(यस्याः) ऊर्ध्वमध्यांगुलिसंयुता रेखा–मध्यांगुलिपर्यन्तं ऊर्ध्वरेखा भवेत्, सा अखण्डभोगा–सा रेखा अखण्डितभोगाय भवति। आखुः–मूषकः, सर्पः–अहिः, काकाभाः–काकस्य आभा इव आभा यस्याः सा रेखा पादतले भवेत् तर्हि सा दुःख-दारिद्र्ययोः सूचिका ॥ १३ ॥

जिस स्त्री के पादतल में मध्यांगुलिपर्यन्त ऊर्ध्वरेखा हो वह अखण्डित भोग प्रदान करने वाली होती है। और जिस स्त्री के पादतल में चूहा, सर्प और के समान रेखा हो तो वह दुःख और दारिद्रय को देने वाली होती है ॥ १३ ॥

पादांगुष्ठलक्षणम्

**उन्नतो मांसलोऽङ्गुष्ठो वर्तुलोऽतुलभोगदः।**
**वक्रो ह्रस्वश्च चिपटः सुखसौभाग्यभञ्जकः ॥ १४ ॥**

उन्नतः—उत्थितः, मांसलः—मांसयुक्तः, वर्तुलः=वृत्ताकारोऽङ्गुष्ठः—पादस्य अङ्गुष्ठः, अतुलभोगदः=अत्यधिकभोगप्रदो भवति। वक्रः—कुटिलः, ह्रस्वः—लघुः, चिपटः=अंगुष्ठः सुखसौभाग्यभञ्जकः—सुखस्य सौभाग्यस्य च भञ्जकः—नाशको भवति ॥ १४ ॥

जिस स्त्री के पैर का अंगठा ऊँचा, मांसयुक्त और गोल हो तो वह अत्यधिक भोग्य पदार्थों को देता है। जिस स्त्री का अंगूठा टेढ़ा, छोटा और चिपटा हो वह सुख और सौभाग्य का नाशक होता है ॥ १४ ॥

पादांगुलिलक्षणम्

**विधवा विपुलेन स्याद् दीर्घांगुष्ठेन दुर्भगा।**
**मृद्वयोऽङ्गुलयः शस्ताः धना वृत्ताः समुन्नताः ॥ १५ ॥**

विपुलेन=विशालेन अङ्गुष्ठेन युक्ता स्त्री विधवा=पतिरहिता स्यात्। दीर्घांगुष्ठेन=लम्बायमानांगुष्ठेन च युक्ता स्त्री दुर्भगा—दुर्भाग्ययुक्ता भवति। मृद्व्यः=कोमलाः, घनाः=परस्परसम्पृक्ताः, वृत्ताः—वर्तुलाकाराः, समुन्नताः—सुष्ठुतया उन्नताः, अङ्गुलयः—पादाङ्गुलयः, शस्ताः=प्रशस्ताः (शुभफलप्रदाः) भवन्ति ॥ १५ ॥

अत्यन्त विशाल अंगूठे वाली स्त्री विधवा और लम्बे अंगूठे वाली दुर्भगा होती है। स्त्रियों की कोमल, घनी (एक दूसरे से मिली हुई) गोल और ऊँची अंगुलियां प्रशस्त (श्रेष्ठ) होती है ॥ १५ ॥

**दीर्घांगुलीभिः कुलटा कृशाभिरतिनिर्धना।**
**ह्रस्वायुष्या च ह्रस्वाभिर्भुग्नाभिर्भुग्नवर्तिनी ॥ १६ ॥**

दीर्घांगुलीभिः—अत्यन्तलम्बायानांगुलीभिः, कुलटा=अपतिव्रता (परपुरुषरता इत्यर्थः) भवति। कृशाभिः—अङ्गुलीभिः, निर्धना—द्रव्यरहिता, ह्रस्वाभिः=लघ्वाकारैः अङ्गुलीभिः ह्रस्वायुष्या—अल्पायुष्या भवति। भुग्नाभिः—कुटिलाभिः, भुग्नवर्तिनी—कुटिला, कपटकर्मरता भवति ॥ १६ ॥

अत्यन्त लम्बी अंगुलियों वाली स्त्री परपुरुषरता (कुलटा) होती है। कृशा अंगुलियों वाली निर्धन, तथा छोटी अंगुलियों वाली अल्पायु होती है। कुटिल (टेढ़ी-मेढ़ी) अंगुलियों वाली कुटिल और कपटपूर्ण कार्य करने वाली होती है॥ १६॥

**चिपिटाभिर्भवेद् दासी विरलाभिर्दरिद्रिणी।**
**परस्परं समारूढाः पादांगुल्यो भवन्ति हि॥ १७॥**
**हत्वा बहूनपि पतीन् परप्रैष्या तदा भवेत्।**

चिपिटाभिः अङ्गुलीभिः दासी भवेत्, विरलाभिः अङ्गुलीभिः दरिद्रिणी=यावज्जीवनं दारिद्र्यमनुभवन्ती जायते। यस्याः परस्परं समारूढाः—एका अङ्गुली अपरांगुल्युपरि समारूढाः पादाङ्गुल्यः, बहून् पतीन् हत्वा, तदा=पश्चात् परप्रैष्या=अपरस्य दूती=संदेशवाहिका भवेत्॥ १७॥

चिपटी अंगुलियों वाली स्त्री दासी होती है, विरली अंगुलियों वाली स्त्री दरिद्र होती है। जिस स्त्री के पैर की अंगुली एक दूसरे पर चढ़ी हुई हों तो वह स्त्री अपने बहुत पतियों को मार कर दूसरों की दूती का काम करती है॥ १७॥

**यस्याः पथि समयान्त्या रजो भूमेः समुच्छलेत्।**
**सा पांसुला प्रजायेत कुलत्रयविनाशिनी॥ १८॥**

यस्या नार्याः, पथि=मार्गे समायान्त्या=मार्गे गच्छन्त्याः सत्याः, भूमेः=भूमितः रजः=धूलिः, समुच्छलेत् सा=स्त्री पांशुला=कुलटा प्रजायेत तथा स्वस्य कुलत्रयविनाशिनी भवति॥ १८॥

जिस नारी के मार्ग में चलने पर भूमि से बहुत धूल उड़ती है—उसे शास्त्रकार 'पांशुला' (=कुलटा) कहते हैं। और वह अपने तीन कुलों का विनाश करने वाली होती है॥ १८॥

**यस्याः कनिष्ठिका भूमिं न गच्छन्त्याः परिस्पृशेत्।**
**सा निहत्य पतिं योषित् द्वितीयं कुरुते पतिम्॥ १९॥**

गच्छन्त्याः=गमनसमये यस्या नार्याः कनिष्ठिका भूमिं न परिस्पृशेत्=भूमिस्पर्शं न करोति, सा योषित्=स्त्री, पतिम्=प्रथमं पतिं निहत्य=द्वितीयम्=अपरं पतिं कुरुते॥ १९॥

चलते समय जिस स्त्री की कनिष्ठका (अंगूठे से पांचवीं) अंगुली पृथ्वी का स्पर्श न करे वह प्रथम पति को मार कर दूसरा पति करती है॥ १९॥

**अनामिका च मध्या यस्या भूमिं न संस्पृशेत्।**
**पतिद्वयं निहत्याद्या द्वितीया च पतित्रयम्॥ २०॥**

यस्या=नार्याः, अनामिका=कनिष्ठिकासमीपे स्थिता, मध्या=मध्यमा=तर्जनी अनामिकयोर्मध्ये स्थिता च भूमिं न संस्पृशेत्=भूमिस्पर्शनं न करोति, तर्हि आदद्या=अनामिका पतिद्वयं निहत्य तृतीयं पतिं कुरुते। द्वितीया=मध्यमा स्त्री पतित्रयं च निहत्य, चतुर्थं पतिं कुरुते ॥ २० ॥

जिस स्त्री की अनामिका पृथ्वी का स्पर्श नहीं करती वह अपने दो पतियों को मार कर तीसरा पति करती है। जिसकी मध्यमा ( बीचवाली ) अंगुली भूमि का स्पर्श नहीं करती वह अपने प्रथम तीन पतियों को मार कर चौथा पति करती है ॥ २० ॥

पतिहीनत्वकारिण्यौ हीने ते द्वे इमे यदि।
प्रदेशिनी भवेद् यस्याः अंगुष्ठाद् व्यतिरेकिनी ॥ २१ ॥
कन्यैव कुलटा सा स्यादेष एव विनिश्चयः ॥ २२ ॥

इमे कनिष्ठानामिके, द्वे हीने=ह्रस्वे सत्यौ पतिहीनत्वकारिण्यौ=भर्तृरहितत्वकारिण्यौ स्तः। यस्याः प्रदेशिनी=अंगुष्ठस्य समीपवर्तिनी अङ्गुली अङ्गुष्ठात् व्यतिरेकिणी=अंगुष्ठादधिका भवेत् सा स्त्री कन्यैव=अविवाहितैव कुलटा=व्यभिचारिणी स्यात्। एष एव शास्त्रकाराणां निश्चयः=निर्णयो वर्तते ॥ २१-२२ ॥

जिस स्त्री की कनिष्ठा और अनामिका—ये दोनों अंगुलियाँ अन्य की अपेक्षा छोटी हों वह स्त्री पतिरहिता होती है। जिसकी प्रदेशिनी ( तर्जनी ) अंगुली अंगुष्ठ से अधिक ( लम्बी ) हो वह स्त्री कुमारी ( अविवाहित ) अवस्था में ही व्यभिचारिणी होती है—ऐसा शास्त्रकारों का निर्णय है ॥ २१-२२ ॥

पादनखपादपृष्ठलक्षणम्

स्निग्धाः समुन्नतास्ताम्रा वृत्ता पादनखाः शुभाः।
राज्ञीत्वसूचकं स्त्रीणां पादपृष्ठं समुन्नतम् ॥ २३ ॥

स्निग्धाः=चिक्कणाः, समुन्नताः=मध्यभागेन उन्नताः, ताम्राः=आरक्ताः, वृत्ताः=वर्तुलाः, पादनखाः शुभाः=कल्याणप्रदाः। स्त्रीणाम्=नारीणाम् समुन्नतम्=समानेन उन्नतम्, पादपृष्ठम्=पादस्योपरिभागः, राज्ञीत्वसूचकम्=राज्ञी भविष्यतीति सूचयति ॥ २३ ॥

स्त्रियों के स्निग्ध ( स्नेहिल ) मध्यभाग उन्नत, तांबे के समान रक्तवर्ण और गोल नख शुभावह=शुभकारी होते हैं। उनके उन्नत पादपृष्ठ रानी होने के सूचक होते हैं ॥ २३ ॥

अस्वेदमसिराढ्यं च मसृणं मृदुमांसलम्।
दरिद्रा मध्यभग्नेन शिरालेन सदाध्वगा ॥ २४ ॥

अस्वेदं=स्वेदरहितम्, असिराढ्यम्=नाड़ीरहितम् ( शिराविक्यरहितम् ), मसृणम्=स्निग्धम्, मृदु=कोमलम् मांसलम्=मांसयुक्तम् यस्याः पाद-युगलं भवत् तत् शुभावहं भवति । या मध्यभुग्नेन=पादस्य मध्यभागेन अन्तर्वर्ती यदि चेत् तर्हि सा स्त्री दरिद्रा भवति, शिरालेन=बहुनाड़ीयुक्तेन पादेन, स्त्री सदा=सर्वदा अध्वगा=मार्गगा भवति ॥ २४ ॥

जिस स्त्री के पैर पसीने से रहित, अधिक नाड़ियों से रहित स्निग्ध और मांस-युक्त हों तो वे शुभकारी होते है। अन्दर की तरफ ( झुके हुए ) पैरों वाली स्त्री दरिद्र होती है और बहुत नाड़ियों से युक्त पैरों वाली स्त्री सदा मार्ग में चलने वाली होती है ॥ २४ ॥

गुल्फलक्षणम्

**रोमाढ्येन भवेद् दासी निर्मांसेन च दुर्भगा।**
**गूढौ गुल्फौ शिवायोक्तावसिरालौ सुवर्तुलौ ॥ २५ ॥**

रोमाढ्येन गुल्फेन स्त्री दासी=सेविका भवति, निर्मांसेन मांसरहितेन गुल्फेन च दुर्भगा=दुर्भाग्ययुक्ता भवति। यस्या उभावपि गुल्फौ गूढौ=मांसेन पिहितौ, असिरालौ=नाड़ीरहितौ, सुवर्तुलौ=वर्तुलाकारौ, तौ शिवाय=कल्याणाय, उक्तौ=कथितौ ॥ २५ ॥

रोमयुक्त गुल्फ वाली स्त्री दासी होती है। मांसरहित गुल्फों वाली स्त्री दुर्भगा होती है। जिसके दोनों गुल्फ मांस से ढके, नाड़ीरहित और गोल हों वे शुभ होते हैं ॥ २५ ॥

पार्ष्णिलक्षणम्

**स्थूलपुटौ शिथिलौ दृश्यौ स्यातां दौर्भाग्यसूचकौ ।**
**समपार्ष्णिः शुभा नारी पृथुपार्ष्णिश्च दुर्भगा ॥ २६ ॥**

स्थूलपुटौ=स्थूलगुल्फौ शिथिलौ, दृश्यौ दुर्भाग्यसूचकौ=दुर्भाग्यस्य संसूचकौ स्याताम्। समपार्ष्णिः=समानपार्ष्णिः=समः पार्ष्णिः ( पादस्य पृष्ठभागः ) यस्याः सा नारी=स्त्री शुभा=कल्याणप्रदा भवति। पृथुपार्ष्णिश्च=स्थूल-पादपृष्ठभागा, दुर्भगा=दौभाग्यशालिनी भवति ॥ २६ ॥

स्त्रियों के बड़े, स्थूल और शिथिल गुल्फ दुर्भाग्यसूचक होते हैं। जिस स्त्री के पैरों की पार्ष्णि ( एड़ियां ) बराबर हों तो शुभकारी होती है। स्थूल ( मोटी ) पार्ष्णि ( एड़ियों ) वाली स्त्री दुर्भगा होती है। (पैरों के पीछे के निचले भाग को 'पार्ष्णि' कहते हैं ) ॥ २६ ॥

**कुलटोन्नतपार्ष्णिः स्याद् दीर्घपार्ष्णिश्च दुःखभाक् ॥**

जङ्घालक्षणम्

**रोमहीने समे स्निग्धे यज्जंघे क्रमवर्तुले ॥ २७ ॥**

उन्नतपार्ष्णिः—उन्नतः पादस्य पृष्ठभागो यस्याः साः कुलटा—व्यभिचारिणी भवति, दीर्घपार्ष्णिश्च—दीर्घः पादस्य पृष्ठभागश्चेत् तर्हि सा स्त्री दुःखभाक्—दुःखान् अनुभवति

उन्नत पार्ष्णि वाली स्त्री कुलटा होती है, और बड़ी पार्ष्णि वाली स्त्री दुःखों को भोगती है ॥

**सा राजपत्नी भवति विशिरे सुमनोहरे ॥ २८ ॥**

यस्या रोमहीने = रोमरहिते, समे—समाने स्निग्धे = चिक्कणे, क्रमवर्तुले—क्रमपूर्वकं वर्तुलाकारे, विशिरे = शिरारहिते, सुमनोहरे—सौन्दर्ययुते जंघे—पादाधारे भवतः, सा स्त्री राजपत्नी—राज्ञः पत्नी भवति ॥ ॥ २७-२८ ॥

जिसकी दोनों जंघायें रोमरहित, दोनों समान, चिकनी, गोल, नाड़ियों से रहित और मनोहर हों, वह राजा की पत्नी होती है ॥ २७-२८ ॥

रोमकूपलक्षणम्

**एकरोमा राजपत्नी द्विरोमा च सुखावहा।**
**त्रिरोमा रोमकूपेषु भवेद् वैधव्यदुःखभाक् ॥ २९ ॥**

( या स्त्री ) प्रतिरोमकूपम्, एकरोमा—एकरोमवती, तर्हि राजपत्नी। एकरोमकूपे द्विरोमा तर्हि सुखावहा—सुखयुक्ता। एकरोमकूपे त्रिरोमा वैधव्यदुःखभाक्—वैधव्यजनितदुःखस्य भोक्त्री भवति ॥ २९ ॥

स्त्री के एक रोमकूप में एक रोम के होने पर राजा की पत्नी होती है, दो रोमों के होने पर सुखों का भोग करती है, और जिसके एक रोमकूप में तीन रोम हों तो वह विधवा होती है ॥ २९ ॥

जानुलक्षणम्

**वृत्तं पिशितसंलग्नं जानुयुग्मं प्रशस्यते।**
**निर्मांसं स्वैरचारिण्या दरिद्रायाश्च विश्लथम् ॥ ३० ॥**

वृत्तं—वर्तुलम्, पिशितसंलग्नम् = मांससंपृक्तम्, जानुयुग्मम्—जानुयुगलम् प्रशस्यते—श्रेष्ठं कथ्यते। निर्मांसं—मांसरहितं स्वैरचारिण्याः = स्वेच्छया

परपुरुषं चरति या सा स्वैरचारिणी तस्याः, विश्लथम्=अपुष्टं च जानुयुग्मं दरिद्रायाः भवति ॥ ३० ॥

जानुलक्षण—गोल और मांसल जानु श्रेष्ठ कहे गये हैं, स्वेच्छा से परपुरुषादिगामिनी स्त्री के मांसरहित दोनों जानु होते हैं, और दरिद्र स्त्री के दोनों जानु ( घुटनें ) ढीले होते हैं ॥ ३० ॥

ऊरुलक्षणम्

**विशिरैः करभाकारैरूरुभिर्मसृणैर्घनैः ।**
**सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः ॥ ३१ ॥**

विशिरैः=शिरारहितैः, करभाकारैः=हस्तिशुण्डाकारैः, मसृणैः=स्निग्धैः, घनैः=परस्परस्पर्शयुक्तैः, सुवृत्तैः=वर्तुलाकारैः, रोमरहितैः=रोमावलीरहितैः, ऊरुभिः=जान्वोः उपरिभागैः स्त्रियः, भूपवल्लभाः=पृथ्वीपतेः प्रियतमा भवेयुः ॥ ३१ ॥

ऊरुलक्षण—शिराओं से रहित, हाथी की सूड़ के समान स्निग्ध, घनी ( दोनों ऊरु आपस में स्पर्श करते हों ), श्रेष्ठ, गोल और रोमों से रहित ऊरुओं वाली स्त्रियां पृथ्वीपति की वल्लभा (=प्रिया ) होती हैं ॥ ३१ ॥

**वैधव्यं रोमशैरुक्तं दौर्भाग्यं चिपिटैरपि ।**
**मध्यच्छिद्रैर्महादुःखं दारिद्र्यं कठिनत्वचैः ॥ ३२ ॥**

रोमशैः=रोमयुक्तैः ऊरुभिः वैधव्यम्=धवस्य=भर्तुः मृत्युकारणात् विगतधवा, तस्या भावो वैधव्यम् , उक्तम्=शास्त्रकारैः कथितम् । चिपिटैः=चर्पटैः ऊरुभिः, स्त्री दौर्भाग्यम्–दुर्भगत्वं भाग्यराहित्यम्, प्राप्नोति । मध्यच्छिद्रैः=उभयोः ऊर्वोर्मध्ये यदि छिद्राणि भवन्ति तर्हि महादुःखं=महत् कष्टं प्राप्नोति । कठिनत्वचैः=स्पर्शे परुषत्वचैः, दारिद्र्यं भवति ॥ ३२ ॥

जिस स्त्री के रोमों से युक्त ऊरु हों तो उस स्त्री को वैधव्य प्राप्त होता है, चिपटी ऊरु हों तो वह दुर्भगा होती है । दोनों ऊरुओं के मध्य में छिद्र प्रतीत हो तो उसे महान् दुःख मिलता है । स्पर्श करने पर जिसकी त्वचा कठोर लगे तो वैसी त्वचा दारिद्र्य प्रदान करती है ॥ ३२ ॥

कटिलक्षणम्

**चतुर्भिरङ्गुलैः शस्ता कटिर्विंशतिसंयुतैः ।**
**समुन्नतनितम्बाढ्या चतुरस्रा मृगीदृशाम् ॥ ३३ ॥**

विंशतिसङ्ख्यकांगुलसंयुतैः=चतुर्भिः अंगुलैः, चतुरस्रा=चतुष्कोणात्मिका, समुन्नतनितम्बाढ्या=सम्यक् साधुतया उन्नतः नितम्बः=कटेः पृष्ठभागः, तेन आढ्या, मृगीदृशाम्=नारीणाम्, कटिः, शस्ता=प्रशस्ता ॥ ३३ ॥

कटिलक्षण—चौबीस ( २४ ) अंगुलविस्तारवाले एवं चारों कोणों से समानतया उन्नत नितम्बों से युक्त स्त्रियों का कटिभाग शुभ कहा गया है ॥ ३३ ॥

**विनता चिपिटा दीर्घा निर्मांसा संकटा कटिः ।**
**ह्रस्वा रोमयुता नार्या दुःखवैधव्यसूचिका ॥ ३४ ॥**

विनता=निम्ना, चिपिटा, दीर्घा=लम्बायमाना, निर्मांसा=मांसरहिता, संकटा=परुषा, ह्रस्वा=लघ्वी, रोमयुता=रोमराजिसहिता कटिः=कटिभागः, दुःखवैधव्यसूचिका=दुःखस्य=कष्टस्य वैधव्यस्य च=पतिमृत्योश्च सूचिका=अभिव्यञ्जिका भवति ॥ ३४ ॥

नीची, चिपटी, लम्बी, मांसरहित, कठोर, छोटी और रोमयुक्त स्त्रियों की कटि ( कमर ) दुःख और वैधव्य की सूचक है ॥ ३४ ॥

नितम्बलक्षणम्

**नितम्बबिम्बो नारीणामुन्नतो मांसलः पृथुः ।**
**महाभोगाय सम्प्रोक्तस्तदन्योऽशर्मणे मतः ॥ ३५ ॥**

उन्नतः=समुन्नतः, मांसलः=मांसयुक्तः, पृथुः=स्थूलः, नारीणां नितम्बबिम्बः, महाभोगाय=समस्तभोग्यपदार्थभोगाय, सम्प्रोक्तः=शास्त्रकारैः उक्तः । उक्तप्रकारतो भिन्नः अन्यलक्षणलक्षितो नितम्बः, अशर्मणे=अकल्याणाय, मतः=शास्त्रकारैः स्वीकृतः ॥ ३५ ॥

नितम्बलक्षण—नारियों का ऊँचा, मांसयुक्त, स्थूल नितम्बभाग अत्यधिक भोगों को देने वाला होता है । उनका उक्त गुणों से भिन्न लक्षणों वाला नितम्ब कष्टप्रद होता है ॥ ३५ ॥

स्फिग्लक्षणम्

**कपित्थफलवद् वृत्तौ मृदुलौ मांसलौ घनौ ।**
**स्फिचौ वलिविनिर्मुक्तौ रतिसौख्यविवर्धनौ ॥ ३६ ॥**

कपित्थफलवद् वृत्तौ=कपित्थः वृक्षविशेषस्तस्य फलवत् वृत्तौ=वर्तुलौ, मृदुलौ=कोमलौ, मांसलौ=मांसयुक्तौ, घनौ=संश्लिष्टौ, वलिविनिर्मुक्तौ=वलिरहितौ, स्फिचौ=कटिप्रोथौ, रतिसौख्यविवर्धनौ=सम्भोगे सुखं वर्धयतः ॥

कपित्थ ( कैथ ) के फल के समान गोल, कोमल मांस से युक्त, घने और वलि (झुर्रियों) से रहित नितम्ब ( कूल्हे ) रतिकाल में सुख को बढ़ाने वाले होते हैं ॥ ३६ ॥

योनिलक्षणम्

**शुभः कमठपृष्ठाभो गजस्कन्धोपमो भगः ।**
**वामोन्नतस्तु कन्याजः पुत्रजो दक्षिणोन्नतः ॥ ३७ ॥**

कमठपृष्ठाभः=कच्छपपृष्ठतुल्यः, गजस्कन्धोपमः=हस्तिस्कन्धसमो भगः-योनिः, शुभः=कल्याणप्रदः ( मतः )। वामोन्नतस्तु-वामभागे उन्नतो भगः-योनिः, कन्याजः=कन्योत्पादकः, (मतः )। दक्षिणोन्नतः-दक्षिणभागे उन्नतो भगः पुत्रजः-पुत्रोत्पादको भवति ॥ ३७ ॥

योनिलक्षण—कछुए की पीठ या हाथी के कन्धे के समान योनि शुभकारी होती है। यदि योनि का बायाँ भाग उन्नत हो तो कन्याओं को और दाहिना भाग उन्नत हो तो वह पुत्रों को उत्पन्न करने वाली होती है ॥ ३७ ॥

**आखुरोमा गूढमणिः सुश्लिष्टः संहतः पृथुः।**
**तुङ्गः कमलवर्णाभः शुभोऽश्वत्थदलाकृतिः ॥ ३८ ॥**

आखुरोमा-मूषकरोमवत् रोमयुक्तः, गूढमणिः-गूढः=अदृश्यः (पिहितः) मणिः=योनेः अग्रभागः, स्थितो भगाङ्कुरः, सुश्लिष्टः=दृढेन संयुक्तः, संहतः-मिलितः, पृथुः-विशालः, तुङ्गः-उन्नतः, कमलवर्णाभः-पङ्कजवर्णाभः, अश्वत्थदलाकृतिः-अश्वत्थपत्राकृतिः भगः-योनिः, शुभः-शुभावही भवति ॥

चूहे के समान रोमों वाली गूढमणि हो ( भग का अग्रभाग गूढ=एक में मिला हुआ सा हो ), विशाल, उन्नत, कमल के वर्णवाली और अश्वत्थ के पत्ते के समान योनि शुभ होती है ॥ ३८ ॥

**कुरंगखुररूपो यश्चुल्लिकोदरसन्निभः।**
**रोमशो विवृतास्यश्च दृश्यनासोऽति दुर्भगः ॥ ३९ ॥**

कुरंगखुररूहः-हरिणखुररूपः, चुल्लिकोदरसन्निभः-चुल्लिकायाः उदरमिव, रोमशः-अधिकरोमयुक्तः, विवृतास्यश्च=वृहन्मुखयुक्तः, दृश्यनासः-नासः-भगनासः-मणिः दृष्टिपथे आगच्छति यस्य सः, अति-अत्यधिकं दुर्भगः-दुःखप्रदो भगो भवति ॥ ३९ ॥

हरिण के खुर के समान, चूल्हे के समान, बहुत बालों वाली, बड़े मुखवाली और जिसकी भगनासा दिखायी पड़े ऐसी योनि अत्यधिक निन्दनीय एवं दुर्भाग्य को बढ़ाने वाली होती है ॥ ३९ ॥

**शंखावर्तो भगो यस्या सा गर्भमिह नेच्छति।**
**चिपिटः कर्पराकारः किंकिरीपददो भगः ॥ ४० ॥**

यस्याः शंखावर्तः-शंखस्यवर्त इव आवर्तः-भगः-योनिः सा इह=अस्मिन् जन्मनि, गर्भं, नेच्छति-गर्भधारणं न कामयते। चिपिटः, कर्पराकारः-भग्नघटकपालाकारो भगः किंकरीपददः=दासीपदं ददाति ॥ ४० ॥

जिस स्त्री का भग शंख के समान वलियों वाला होता है वह कभी गर्भ धारण नहीं कर पाती। चिपटी भग और ठीकरे के समान भगवाली स्त्री दूसरे की दासी ( नौकरानी ) होती है ॥ ४० ।)

**वंशवेतसपत्राभो गजरोमोच्चनासिकः ।**
**विकटः कुटिलाकारो लम्बगल्लस्तथाऽशुभः ॥ ४१ ॥**

वंश-वेतसपत्राभः=वंशवेतसयोः पत्राभ्यां समानः, गजरोमाः=हस्तिरोमा, उच्चनासिकः=उन्नतभगाङ्कुरः, विकटः=भीषणः, विशालः=भयङ्करः कुटिलाकारः=वक्राकारयुक्तः, तथा लम्बगल्लः=लम्बकपोलो भगः, अशुभः=अकल्याणकारी भवति ॥ ४१ ॥

बांस और बेंत के पत्ते के समान, हाथी के रोमों के तुल्य रोमों वाली और ऊँची भगनासा वाली, विशाल, भयंकर कुटिल=( टेढ़ी ) और लम्बे गालों वाली ( कपोलों वाली ) योनि अशुभ होती है ॥ ४१ ॥

### जघनलक्षणम्

**भगस्य भालं जघनं विस्तीर्णं तुङ्गमांसलम् ।**
**मृदुलं मृदुरोमाढ्यं दक्षिणावर्तमीडितम् ॥ ४२ ॥**

भगस्य=योनेः, भालम्=मस्तकं ( योनित उपरितनो भागः ) तदेव जघनं विस्तीर्णम्=विस्तृतम्, तुङ्गमांसलं च=उन्नतं मांसलम्=मांसयुक्तं च मृदु=कोमलं रोमाढ्यं=रोमयुक्तम्, दक्षिणावर्तम्=दक्षिणदिशि भ्रमरयुक्तम्। जघनम्, ईडितम्=पूजितम्, प्रशंसितम् ॥ ४२ ॥

योनि का मस्तक—योनि के ऊपर के स्थान को 'जघन' कहते हैं। वह जघन यदि विस्तृत, ऊँचा, मांसयुक्त, कोमल, रोमों से युक्त, दक्षिण की ओर को घुमावदार ( दक्षिणावर्त ) हो तो श्रेष्ठ होता है ॥ ४२ ॥

**वामावर्तं च निर्मांसं भुग्नं वैधव्यसूचकम् ।**
**संकटस्थपुटं रूक्षं जघनं दुःखदं सदा ॥ ४३ ॥**

वामावर्तम्-उत्तरे आवर्तयुक्तम्, निर्मांसं-मांसरहितम् भुग्नं=कुटिलम्-भग्नं जघनं=भगादुपरितनो भागः, वैधव्यस्य=पतिमृत्योः सूचकम्=संकेतदम् भवति। संकटस्थपुटम्=संकुचितम् रूक्षम्=शुष्कम् जघनं सदा=सर्वदा दुःखदं=दुःखप्रदं भवति ॥ ४३ ॥

बांई ओर घूमा हुआ, मांसरहित, कुटिल (टेढ़ा) जघन वैधव्यकारक होता है। संकुचित और रूखा, जघन दुःखदायी होता है ॥ ४३ ॥

## वस्तिलक्षणम्

**बस्तिः प्रशस्ता विपुला मृद्वी च स्तोकमुन्नता।**
**रोमशा च शिराला च रेखांका नैव शोभना ॥ ४४ ॥**

विपुला = विस्तृता, मृद्वी = कोमला, स्तोकमुन्नता-स्वल्पोन्नता = स्वल्पोन्नता, वस्तिः-नाभिप्रदेशस्य अधोभागः ( मूत्राशयः ), प्रशस्ता = विज्ञैः प्रशंसिता भवति। रोमशा = रोमयुक्ता, शिराला च = नाड़ीयुक्ता, रेखाङ्का-रेखायुक्ता च वस्तिः, नैव शोभना = नैव कल्याणप्रदा भवति ॥ ४४ ॥

नाभि के नीचे चार अंगुल वाले स्थान को 'बस्तिप्रदेश' कहते हैं। शास्त्रकारों द्वारा वह बस्तिप्रदेश विस्तृत, कोमल, थोड़ा उन्नत ही प्रशस्त कहा गया है। और वही स्थान यदि रोमयुक्त, नाड़ियों वाला, रेखाओं से युक्त हो तो अशुभ होता है ॥

## नाभिलक्षणम्

**गम्भीरदक्षिणावर्ता नाभिः स्यात् सुखसम्पदे।**
**वामावर्ता समुत्ताना व्यक्तग्रन्थिर्न शोभना ॥ ४५ ॥**

सम्प्रति नाभेर्लक्षणं कथ्यते—गम्भीरदक्षिणावर्ता = गम्भीरा = खातयुक्ता, दक्षिणावर्ता = दक्षिणदिशि भ्रमरयुक्ता, नाभिः सुखसम्पदे = सुखाय सम्पत्तये च स्यात्। वामावर्ता = वामदिशि भ्रमरयुक्ता समुत्ताना-उन्नता, व्यक्तग्रन्थिः-नाभेः ग्रन्थिरूपो मध्यभागः, यदि स्पष्टरूपेण दृष्टिगोचरा भवेत् तर्हि सा न शोभना-न कल्याणवहा भवति ॥ ४५ ॥

नाभि—गहरी दक्षिणावर्त नाभि सुख और सम्पत्ति देने वाली होती है। परन्तु वामावर्त उन्नत, स्पष्ट रूप से मध्य में स्थित, गांठ दिखाई पड़ने वाली नाभि कल्याणप्रद नहीं होती ॥ ४५ ॥

## कुक्षिलक्षणम्

**सूते सुतान् बहून्नारी पृथुकुक्षी सुखास्पदम्।**
**क्षितीशं जनयेत् पुत्रं मण्डूकाभेन कुक्षिणा ॥ ४६ ॥**

पृथुकुक्षी-विस्तीर्णोदरयुक्ता नारी, बहून् सुतान्-पुत्रान्, सूते-उत्पादयति, सा स्त्री सुखप्रदात्री च भवति। मण्डूकाभेन-मण्डूकोपमोदरेण ( कुक्षिणा ) स्त्री, क्षितीशम्-पृथ्वीपतिं पुत्रं जनयेत्-उत्पादयेत् ॥ ४६ ॥

बड़ी कोख ( उदर ) वाली स्त्री बहुत पुत्रों को उत्पन्न करने वाली एवं सुख देने वाली होती है। मेंढक के समान उदर ( कोख ) वाली स्त्री राजा को जन्म देती है ॥ ४६ ॥

वलिलक्षणम्

**उन्नतेन वलीभाजा सावर्तेनापि कुक्षिणा ।**
**वन्ध्या प्रव्रजिता दासी क्रमाद् योषा भवेदिह ॥ ४७ ॥**

योषा=स्त्री, इह अस्मिन् जन्मनि, उन्नतेन वलीभाजा=उदरे नाभितः उपरि संकुचितरेखायुक्तेन, सावर्तेन=भ्रमरयुक्तेन उदरेण क्रमाद् बन्ध्या= सन्तानरहिता ( विशेषतो गर्भं न धारयति )। प्रव्रजिता=वैराग्ययुक्ता, दासी च भवेत् ॥ ४७ ॥

उन्नत और वलियों ( नाभि के ऊपर उदर के सिकुड़ने से उत्पन्न रेखाओं ) से युक्त, भ्रमरयुक्त ( कोख ) वाली स्त्री क्रमशः वन्ध्या ( गर्भधारण न करने वाली ), पुनः विरागयुक्त तत्पश्चात् दासी का कर्म करने वाली होती है ॥४७॥

पार्श्वलक्षणम्

**समैः समांसलैर्मृदुभिर्योषिन्मग्नास्थिभिः शुभैः ।**
**पार्श्वैः सौभाग्यसुखयोर्निधानं स्यादसंशयम् ॥ ४८ ॥**

समैः=समानैः, समांसलैः=मांसयुक्तैः, मृदुभिः=कोमलैः, मग्नास्थिभिः=मांसाधिक्याद् अदृश्यास्थिभिः, पार्श्वैः=पार्श्वभागैः ( हिन्दीभाषायां 'कूल्हा' इति कथितैः) शुभैः=शुभसूचकैः, असंशयम्=संशयरहितम्, सौभाग्य-सुखयोः=सौभाग्यस्य सुखस्य च निधानम्=कोषो भवति ॥ ४८ ॥

स्त्रियों के समान, मांसयुक्त, कोमल, गुप्त अस्थियों वाले पार्श्व ( कूल्हे ) कल्याणकारी होते हैं। और सौभाग्य तथा सुख के कोष ( खजाना ) होते हैं—इसमें किसी प्रकार का संशय नहीं ॥ ४८ ॥

**यस्य दृश्यशिरे पार्श्वे उन्नते रोमसंयुते ।**
**निरपत्या च दुःशीला सा भवेद् दुःखशेवधिः ॥ ४९ ॥**

यस्याः स्तनयोः दृश्यशिरे=नाड़ीयुक्ते, उन्नते=उच्चे, रोमसंयुतेपार्श्वे= रोमयुक्ते पार्श्वभागे स्तः, स नारी निरपत्या=सन्तानरहिता, दुःशीला=दुष्टस्य भावयुक्ता, दुःखशेवधिः=दुःखनिधाना च भवेत् ॥ ४९ ॥

जिस स्त्री के स्तनों में नाड़ी दिखाई पड़ती हों और पार्श्वभाग ऊँचे तथा रोम-युक्त हों वह स्त्री सन्तानरहित, दुष्टस्वभाव वाली और दुःख की खान होती है ॥४९॥

**उदरेणातितुच्छेन विसिरेण मृदुत्वचा ।**
**योषिद् भवति भोगाढ्या नित्यं मिष्टान्नसेविनी ॥ ५० ॥**

अतितुच्छेन=अत्यन्तलघूदरेण, विशिरेण=शिरारहितेन, मृदुत्वचा=कोमलत्वचा युक्तेन योषिद्=नारी, भोगाढ्या=बहुभोगयुक्ता, नित्यं=सर्वदा मिष्टान्नसेविनी=मधुरान्नसेविनी भवति ॥ ५० ॥

अत्यन्त छोटे, नाड़ियों से रहित, तथा कोमल त्वचा से युक्त पेट वाली नारी बहुत से भोगों को भोगने वाली और नित्यप्रति मधुर मिष्टान्न भोजन करने वाली होती है ॥ ५० ॥

**कुम्भाकारं दरिद्राया जठरं च मृदङ्गवत् ।**
**कूष्माण्डाभं यवाभं च दुष्पूरं जायते स्त्रियाः ॥ ५१ ॥**

कुम्भाकारं=घटाकारं जठरं=उदरम् दरिद्रायाः=दरिद्रस्त्रियो भवति । मृदङ्गवत्=मृदङ्गः वाद्यविशेषः तद्वत्, कूष्माण्डाभं=कूष्माण्डमिव, यवाभम्=यवाकारं उदरं दुष्पूरं=दुःखेन कष्टेन पूरम्=पूर्णम् भवति ( कष्टपूर्वकं भोजनं प्राप्नोति ) ॥ ५१ ॥

दरिद्रा स्त्री का के पेट कुम्भ ( घड़े ) के समान होता है । मृदङ्ग के समान, कूष्माण्ड ( भतुहा ) जौ ( यव ) के समान उदरवाली स्त्री का पेट बड़े कष्ट से भरता है अर्थात् उसे बड़े परिश्रम से भोजन मिलता है ॥ ५१ ॥

**सुविशालोदरी नारी निरपत्या च दुर्भगा ।**
**प्रलम्ब-जठरा हन्ति श्वशुरं चापि देवरम् ॥ ५२ ॥**

सुविशालोदरी=अत्यन्तबृहदुदरयुक्ता, नारी=स्त्री, निरपत्या=सन्तानरहिता, दुर्भगा=भाग्यरहिता च भवति । प्रलम्बजठरा=वृहल्लम्बायमानोदरी स्त्री, श्वशुरं=पत्युः पितरम्, देवरम्=पत्युः अनुजं च, हन्ति=विनाशयति ॥ ५२ ॥

विशाल उदरवाली स्त्री सन्तानरहित और दुर्भाग्यसम्पन्न, एवं बड़े, लम्बे उदरवाली अपने स्त्री श्वसुर तथा देवर को मारने वाली होती है ॥ ५२ ॥

रोमावलिलक्षणम्

**मध्यक्षामा च सुभगा भोगाढ्या सवलित्रया ।**
**ऋज्वी तन्वी च रोमाली यस्याः सा शर्मनर्मभूः ॥ ५३ ॥**

मध्यक्षामा=यस्या उदरस्य मध्यभागः कृशो भवति सा स्त्री, सुभगा=शोभनभाग्ययुक्ता, या त्रिभिः वलिभिः=रेखाभिः युक्ता सा भोगाढ्या=बहुभोग्यपदार्थयुक्ता । यस्या उदरे ऋज्वी=सरला, तन्वी=सूक्ष्मा च रोमाली=रोम्णः पंक्तिर्भवति सा स्त्री शर्मनर्मभूः=शर्मणः=कल्याणस्य नर्मणः=रतिसुखस्य च भूः=स्थानं भवति ॥ ५३ ॥

जिस स्त्री के उदर में सीधी, सूक्ष्म रोमों की पंक्ति हो वह स्त्री कल्याण एवं रति-सुख की भूमि ( अर्थात् उसमें विशेष कल्याण और नम्रता रहती है ) होती है ॥ ५३ ॥

**कपिला कुटिला स्थूला विच्छिन्ना रोमराजिका ।**
**चौर्य-वैधव्य-दौर्भाग्यं विदध्यादिह योषिताम् ॥ ५४ ॥**

कपिला=धूम्रवर्णा, कुटिला, स्थूला=सूक्ष्मतारहिता, विच्छिन्ना-यत्र तत्र, रोमराजिका=रोम्णाम् आवलिः, योषिताम्=नारीणाम्, चौर्यम्-चौर्यकर्मणि निरतम् वैधव्यम्=पतिमृत्युकारकम् दौर्भाग्यम्=दुष्टभाग्ययुक्तम्, इह=अस्मिन् संसारे जन्मनि वा, विदध्यात्=कुर्यात् ॥ ५४ ॥

कपिलवर्ण की टेढ़ी और कटी हुई मोटे रोमों की पंक्ति स्त्रियों को चोर, विधवा, निकृष्ट भाग्यवाली बनाती है ॥ ५४ ॥

## हृदयलक्षणम्

**निर्लोमं हृदयं यस्याः समं निम्नत्ववर्जितम् ।**
**ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेम समालभेत् ॥ ५५ ॥**

निर्लोमं-रोमरहितम्, समम्=समानम्, निम्नत्ववर्जितम्=निम्नत्व-रहितं यस्या हृदयं भवति सा स्त्री, ऐश्वर्यम्=समस्तसुखसाधनयुक्तम्, अवैधव्यं=वैधव्याभावम्, प्रियप्रेम=प्रियस्य-पत्युः प्रेम=स्नेहं च समा-लभेत्=साधुतया प्राप्नोति ॥ ५५ ॥

जिसका हृदय रोमों से रहित और बराबर ऊँचा-नीचा, नहीं होता, वह स्त्री समस्त ऐश्वर्ययुक्त, पतिवियोग को न प्राप्त करती हुई पति का प्रेम प्राप्त करती है ॥ ५५ ॥

**विस्तीर्णहृदया योषा पुंश्चली निर्दया तथा ।**
**उद्भिन्नरोमहृदया पतिं हन्ति विनिश्चितम् ॥ ५६ ॥**

विस्तीर्णहृदया=विशालहृदया योषा-स्त्री, पुंश्चली=परपुरुषगामिनी तथा निर्दया-दयारहिता भवति। उद्भिन्नरोमहृदया=रोमयुक्तहृदया योषा=पतिं=भर्तारम्, विनिश्चितम्=निश्चितरूपेण, हन्ति=विना-शयति ॥ ५६ ॥

बड़े हृदय वाली स्त्री परपुरुष में आसक्त और दयारहित होती है। रोमों से युक्त हृदयवाली स्त्री निश्चित ही अपने पति को मारने वाली होती है ॥ ५६ ॥

**अष्टादशाङ्गुलततमुरः पीवरमुन्नतम् ।**
**सुखाय, दुःखाय भवेद् रोमशं विषमं पृथु ॥ ५७ ॥**

अष्टादशांगुलततम्=अष्टादशांगुलप्रमाणं ततम्=विस्तीर्णम्, उरः=हृदयं पीवरं=पुष्टम् , उन्नतम्, सुखाय=सुखप्रदानाय भवति। रोमशम्=रोमयुक्तम् , विषमम्=असमानम्, पृथु=विशालं हृदयं दुःखाय=दुःखप्रदानाय भवेत् ॥५७॥

स्त्री का अष्टादश ( १८ ) अंगुल विस्तृत, मोटा ( पुष्ट ) और उन्नत हृदय सुख देने वाला होता है। और रोमयुक्त, विषम ( असमान ) पृथु ( स्थूल ) हृदय दुःख प्रदान करने वाला होता है ॥ ५७ ॥

कुचलक्षणम्

**घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ।**
**स्थूलाग्रौ विरलौ शुष्कौ वामोरूणां न शर्मदौ ॥ ५८ ॥**

वामोरूणाम्=नारीणां घनौ=सान्द्रौ, वृत्तौ=वर्तुलौ, दृढौ=कठोरौ, पीनौ=स्थूलौ, समौ=समानौ, पयोधरौ=स्तनौ, शस्तौ=प्रशस्तौ। स्थूलाग्रौ=पीनाग्रभागौ, विरलौ=उभयोः स्तनयोर्मध्ये अन्तरालयुक्तौ, शुष्कौ=शुष्कायमाणौ न शर्मदौ=न कल्याणप्रदौ ॥ ५८ ॥

स्तनलक्षण—स्त्री के स्तन घने ( दोनों मिले हुए ), गोल, कठोर, स्थूल और दोनों बराबर हों तो श्रेष्ठ होते हैं। स्तनों का अग्रभाग स्थूल ( मोटा ), विरल ( दोनों स्तनों के बीच में स्थान होना ) और शुष्क हो तो शुभकारी नहीं होते ॥ ५८ ॥

**दक्षिणोन्नतवक्षोजा पुत्रिणी त्वग्रणी मता।**
**वामोन्नतकुचा सूते कन्यां सौभाग्यसुन्दरीम् ॥ ५९ ॥**

यस्याः दक्षिणोन्नतवक्षोजा=दक्षिणो वक्षोज उन्नतो यस्याः सा पुत्रिणी=पुत्रस्य जननी, अग्रिणी=श्रेष्ठा च भवति। वामोन्नतकुचा=वामोन्नतस्तनयुक्ता स्त्री सौभाग्यसुन्दरीम्=सौभाग्ययुक्तां सुन्दरीं च कन्याम्, सूते=उत्पादयति ॥ ५९ ॥

जिस स्त्री का दाहिना स्तन उन्नत हो वह पुत्रों को उत्पन्न करने वाली और श्रेष्ठ होती है। और जिस स्त्री का बायां स्तन ऊँचा हो तो वह सौभाग्यशाली और सुन्दर कन्या को उत्पन्न करती है ॥ ५९ ॥

**अरघट्टघटीतुल्यौ कुचौ दौःशील्यसूचकौ।**
**पीवरास्यौ सान्तरालौ पृथूप्रान्तौ न शोभनौ ॥ ६० ॥**

यस्याः अरघट्टघटीतुल्यौ=जलघटीयन्त्रसमौ कुचौ=स्तनौ दौःशील्यसूचकौ=निकृष्टशीलसूचकौ, पीवरास्यौ=स्थूलाग्रभागौ, सान्तरालौ=अन्तरालयुक्तौ, पृथुप्रान्तौ=विस्तीर्णोपान्तौ स्तनौ न शोभनौ=न कल्याणप्रदौ ॥ ६० ॥

जिस स्त्री के स्तन जलघटीयन्त्र के समान हों वह स्त्री बहुत ही दुःशील ( व्यभिचारिणी ) होती है। स्तनों का अग्रभाग मोटा और आपस में विशेष दूरी वाला और जिसका मूल से अग्रभाग विशाल हो वह स्त्री शुभकारी नहीं होती ॥ ६० ॥

**मूले स्थूलौ क्रमकृशावग्रे तीक्ष्णौ पयोधरौ।**
**सुखदौ पूर्वकाले तु पश्चादत्यन्तदुःखदौ ॥ ६१ ॥**

मूले=मूलभागे, स्थूलौ क्रमकृशौ=क्रमशः अग्रे कृशौ, अग्रे तीक्ष्णौ=अग्रभागे तीक्ष्णौ, अत्यन्तकृशौ, पयोधरौ=स्तनौ, पूर्वकाले=प्रथमावस्थायां सुखदौ=सुखानां प्रदायकौ, पश्चात्=पश्चिमावस्थायाम्, अत्यन्तदुःखदौ=विशेषकष्टान् प्रदत्तः ॥ ६१ ॥

स्तनों का मूल भाग विशेष मोटा हो और क्रमशः धीरे-धीरे पतला होता हुआ अग्रभाग बहुत ही तीक्ष्ण हो तो ऐसे स्तन पूर्वावस्था में (पहले) सुख प्रदान करते हैं पश्चात् ( उसके बाद की अवस्था में ) विशेष कष्ट देने वाले होते हैं ॥ ६१ ॥

### चूचुकलक्षणम्

**सदृशं चूचुकयुगं शस्तं श्यामं सुवर्तुलम्।**
**अन्तर्मग्नं च दीर्घं च कृशं क्लेशाय जायते ॥ ६२ ॥**

चूचुकयुगम्=स्तनाग्रभागद्वयं सदृशं=समानं श्यामम्=कृष्णं सुवर्तुलम्=सुवर्तुलाकारं शस्तं=प्रशस्तम् ( शोभनम् ), अन्तर्मग्नम्=गूढम् ( अदृश्यम् ) दीर्घम्=अतीव लम्बायमानं, कृशं=दुर्बलं चूचुकं क्लेशाय= ( कष्टप्रदानाय ) जायते=उत्पद्यते ॥ ६२ ॥

समान, काले, सुन्दर और गोल दोनों चुचुक ( स्तनों के अग्रभाग ) शुभ कहे गये हैं। अन्तर्मग्न ( छिपे हुए ), लम्बे और बहुत पतले चुचुक कष्ट देने वाले होते हैं ॥ ६२ ॥

### जत्रुलक्षणम्

**पीवराभ्यां च जत्रुभ्यां धनधान्यनिधिर्वधूः।**
**श्लथास्थिभ्यां च निम्नाभ्यां विषमाभ्यां दरिद्रिणी ॥ ६३ ॥**

वधूः,=परिणीता स्त्री पीवराभ्यां=स्थूलाभ्यां जत्रुभ्याम्=स्कन्धयोः सन्धिभ्याम्, धनधान्यस्य=धनस्य=द्रव्यस्य, धान्यस्य=अन्नादिकस्य निधिः= स्थानं भवति। श्लथास्थिभ्यां=शिथिलास्थियुक्ताभ्यां विषमाभ्यां=परस्परमसमानाभ्यां च जत्रुभ्यां स्त्री दरिद्रिणी=दारिद्रयेण पीडिता भवति ॥ ६३ ॥

मोटे जत्रुओं ( स्कन्ध की सन्धियों ) वाली स्त्री धन और धान्यादि की खजाना होती है और शिथिल, दुर्बल, नीचे तथा परस्पर असमान जत्रुओं वाली स्त्री दरिद्र होती है ।। ६३ ।।

### स्कन्धलक्षणम्

**अबद्धावनतौ स्कन्धावदीर्घावकृशौ शुभौ ।**
**वक्रौ स्थूलौ च रोमाढ्यौ प्रैष्य-वैधव्यसूचकौ ।। ६४ ।।**

अबद्धावनतौ=न बद्धौ, अनतौ=न नतौ, अदीर्घौ=न लम्बायमानौ, अकृशौ=न दुर्बलौ, स्कन्धौ=अंसौ शुभौ=कल्याणप्रदौ । वक्रौ=कुटिलौ, स्थूलौ=पीवरौ, रोमाढ्यौ=बहुरोमयुक्तौ स्त्रीणां स्कन्धौ, प्रैष्य-वैधव्यसूचकौ=दास्य-वैधव्यसूचकौ भवतः ।। ६४ ।।

जो न बँधे न झुके हों, बहुत लम्बे और दुर्बल न हों स्त्रियों के ऐसे स्कन्ध (भुजाओं के मूल भाग ) कल्याणकारी होते हैं । टेढ़े, बहुत मोटे, अधिक रोमों से युक्त कन्धे स्त्री को दासी एवं विधवा बनाते हैं ।। ६४ ।।

**निगूढसन्धी स्रस्ताग्रौ शुभावंसौ सुसंहतौ ।**
**वैधव्यदौ समुच्चाग्रौ निर्मांसावतिदुःखदौ ।। ६५ ।।**

निगूढसन्धी=स्कन्धस्य सन्धी निगूढौ=गुप्तौ, स्रस्ताग्रौ=च्युताग्रौ, सुसंहतौ=साधुतया मिलितौ, अंसौ=स्कन्धौ, शुभौ=शुभकारकौ । समुच्चाग्रौ=उच्चाग्रभागयुक्तौ, वैधव्यदौ=वैधव्यकारकौ । निर्मांसौ=मांसरहितौ स्कन्धौ दुःखदौ=दुःखप्रदौ ।। ६५ ।।

स्त्री के दोनों स्कन्धों की सन्धियाँ गुप्त, उनका अग्रभाग गिरा हुआ, या मिले हुए स्कन्ध कल्याणप्रद होते हैं । अग्रभाग ऊँचा हो तो वैधव्यकारक तथा मांसरहित स्कन्ध दुःख देने वाले होते हैं ।। ६५ ।।

### कक्षयोः लक्षणम्

**कक्षे सुसूक्ष्मरोमे च तुंगे स्निग्धे च मांसले ।**
**शस्ते, न शस्ते गम्भीरे सिराले स्वेदमेदुरे ।। ६६ ।।**

सुसूक्ष्मरोमे=अतिसूक्ष्मरोमयुक्ते, तुंगे=उन्नते, स्निग्धे=चिक्कणे मांसले=मांसयुक्ते, कक्षे=बाहूमूले, शस्ते=कल्याणप्रदे । गम्भीरे=निम्ने, सिराले=शिरायुक्ते, स्वेदमेदुरे=विशेषस्वेदयुक्ते कक्षे, न शस्ते=न प्रशंसनीये ।। ६६ ।।

सूक्ष्म ( बहुत पतले ) रोमों से युक्त, उन्नत, चिकने और मांसयुक्त कक्ष ( काँख=भुजाओं के मूल भाग ) श्रेष्ठ कहे गये हैं, गहरे, शिरायुक्त और अधिक पसीने वाले कक्ष श्रेष्ठ नहीं होते ।। ६६ ।।

## भुजालक्षणम्

**स्यातां दोषौ तु निर्दोषौ गूढास्थिग्रन्थिकोमलौ ।**
**विसिरौ च विरोमाणौ सरलौ हरिणीदृशाम् ॥ ६७ ॥**

दोषौ=भुजौ तु गूढास्थिग्रन्थिकोमलौ=गूढास्थनः गूढग्रन्थियुक्तौ कोमलौ, विसिरौ=शिरारहितौ, विरोमाणौ=रोमराजिरहितौ, सरलौ=ऋजू, दोषौ=भुजौ, हरिणीदृशाम्=नारीणाम्, निर्दोषौ=दोषरहितौ ॥ ६८ ॥

स्त्रियों की छिपी हुई हड्डियों की गांठें ( जोड़ ), कोमल, शिरा ( नाड़ियों ) तथा रोमरहित और सीधी भुजाएं निर्दोष कही गई हैं ॥ ६७ ॥

**वैधव्यं स्थूलरोमाणौ ह्रस्वौ दौर्भाग्यसूचकौ ।**
**परिक्लेशाय नारीणां परिदृश्यसिरौ भुजौ ॥ ६८ ॥**

स्थूलरोमाणौ=पीवररोमाणौ यस्याः सा स्त्री वैधव्यं=विधवा=धवः=पतिस्तेन रहिता भवति । ह्रस्वौ भुजौ यस्या सा दौर्भाग्यं भजते । परिदृश्यसिरौ=यस्याः भुजयोः शिराणां अवलोकनं भवति सा नारी=स्त्री परिक्लेशाय=चतुर्दिग्भ्यः क्लेशान् प्राप्नोति ॥ ६८ ॥

मोटे रोमों से युक्त भुजावाली स्त्री विधवा होती है । जिसकी छोटी भुजाएं हों वह दुर्भगा होती है । जिसकी भुजाओं में शिरायें दिखायी पड़ती हों वह चारों ओर से क्लेशों से घिरी रहती है ॥ ६८ ॥

## हस्तलक्षणम्

**अम्भोजमुकुलाकारम् अष्टांगुलिसम्मुखम् ।**
**हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ॥ ६९ ॥**

अम्भोजस्य=कमलस्य मुकुलाकारम्=कुड्मलाकारम्, अंगुष्ठांगुलिसम्मुखम् हस्तद्वयम्, मृगाक्षीणां=नारीणाम्, बहुभोगाय=विवधसुखभोगाय जायते ॥ ६९ ॥

कमल की कुछ कुछ मुख खुली हुई कली के समान अंगूठा अंगुलियों वाले हाथ स्त्रियों के लिए बहुत भोग प्रदान करने वाले होते हैं ॥ ६९ ॥

## पाणितललक्षणम्

**मृदुमध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम् ।**
**प्रशस्तं शस्तरेखाढ्यमल्परेखं शुभश्रियम् ॥ ७० ॥**

मृदु=कोमलम्, मध्योन्नतम्=उन्नतम्, अरन्ध्रकम्=रन्ध्ररहितम्, पाण्योस्तलं=हस्तयोस्तलम्, प्रशस्तम्=श्रेष्ठम्, शस्तरेखाढ्यम्=श्रेष्ठरेखायुक्तम्, अल्परेखं=स्वल्परेखायुक्तं स्त्रीणां करतलम्, शुभश्रियम्=कल्याणाय भवति ॥

कोमल मध्यभाग उन्नत, छिद्ररहित अंगुलियों से युक्त, श्रेष्ठ रेखाओं से युक्त और थोड़ी रेखाओं वाली स्त्री की हथेली कल्याणप्रद होती है ॥ ७० ॥

**विधवा बहुरेखेण विरेखेण दरिद्रिणी ।**
**भिक्षुकी तु सिराढ्येण नारी करतलेन वै ॥ ७१ ॥**

बहुरेखेण=रेखाणामाधिक्येन करतलेन नारी विधवा, विरेखेण=रेखारहितेन दरिद्रिणी=दरिद्रा भवति, सिराढ्येन=बहुशिरायुक्तेन हस्तेन भिक्षुकी=भिक्षावृत्ति कारिणी, वै=इति निश्चयेन, करतलेन=हस्तलेन, एतादृशी भवति ॥ ७१ ॥

बहुत रेखा से युक्त हाथ वाली विधवा, रेखारहित हाथ वाली दरिद्र, शिराओं से युक्त हाथवाली स्त्री निश्चित ही भिक्षा मांगने वाली होती है ॥ ७१ ॥

**विरोमं विसिरं शस्तं पाणिपृष्ठं समुन्नतम् ।**
**वैधव्यहेतुरोमाढ्यं निम्नं सिस्नायुतं त्यजेत् ॥ ७२ ॥**

विरोमम्=रोमरहितम्, विसिरं=शिरारहितम्, समुन्नतम्=साधुतया उन्नतम्, पाणिपृष्ठं=हस्तस्य पृष्ठभागः, शस्तम्=श्रेष्ठं भवति । रोमाढ्यम्=बहुरोमयुक्तं निम्नम्=अवनतम्, सिस्नायुतं=शिरायुक्तं यस्यास्तां स्त्रीं त्यजेत्=न गृह्णीयात् ॥ ७२ ॥

स्त्री के रोमों और शिराओं से रहित उन्नत हाथ का पृष्ठ भाग श्रेष्ठ कहा गया है । रोमों से युक्त, नीचे मध्यभाग एवं नाड़ियों से युक्त हाथ के पृष्ठ भाग वाली स्त्री का त्याग कर दे । अर्थात् ऐसी स्त्री से कोई परिणयादि सम्बन्ध न करे ॥ ७२ ॥

## हस्तरेखालक्षणम्

**रक्ता व्यक्ता गभीरा च स्निग्धा पूर्णा च वर्तुला ।**
**कररेखाङ्गनायाः स्याच्छुभा भाग्यानुसारतः ॥ ७३ ॥**

रक्ता=रक्तवर्णयुक्ता, व्यक्ता=स्पष्टा, गभीरा=गम्भीरा, स्निग्धा=चिक्कणतायुक्ता, पूर्णा=अत्रुटिता, वर्तुला=वृत्ताकारा, अङ्गनायाः कररेखा=हस्तरेखा, भाग्यानुसारतः=प्रारब्धानुसारतः, शुभा=कल्याणवहा स्यात् ॥

स्त्री की हाथ लाल, स्पष्ट, गहरी, चिकनी, विना टूटी ( अखण्डित ) और गोल रेखा भाग्यानुसार शुभ होती है ॥ ७३ ॥

**मत्स्येन शुभगा नारी स्वस्तिकेन वसुप्रदा ।**
**पद्मेन भूपतेः पत्नी जनयेद् भूपतिं सुतम् ॥ ७४ ॥**

मत्स्येन=मीनसमरेखायुक्तेन हस्तेन, नारी=स्त्री, सुभगा=सौभाग्ययुक्ता, स्वस्तिकेन–स्वस्तिकचिह्नयुक्तेन वसुप्रदा=धनप्रदा ( भवति )। पद्मेन–कमलाकारचिह्नयुक्तेन हस्तेन नारी भूपतेः=पृथ्वीपतेः, पत्नी–स्त्री भवति तथा भूपतिम्=राज्यकर्तारं सुतम्–पुत्रम्, जनयेत्–उत्पादयेत् ॥ ७४ ॥

जिसका हाथ मछली के चिह्न से युक्त हो वह सौभाग्यशालिनी होती है, स्वस्तिक चिह्न हो तो धन से युक्त होती है, कमल के चिह्न से युक्त हाथ वाली राजा की पत्नी होती है तथा वह राज्य करने वाले पुत्र को उत्पन्न करती है ॥ ७४ ॥

**चक्रवर्तिस्त्रियाः पाणौ नद्यावर्तः प्रदक्षिणः ।**
**शङ्खातपत्रकमठा नृपमातृत्वसूचकाः ॥ ७५ ॥**

प्रदक्षिणो नद्यावर्तः=दक्षिणोन्मुख-नद्यां यथा आवर्तः=भ्रमरो भवति तथैव आवर्तः चक्रवर्ती=आसमुद्रं शासको राजा तस्या स्त्रियाः पाणौ–हस्ते भवति । शङ्खातपत्रकमठाः=शङ्ख इव आतपत्रं=छत्रं कमठः=कूर्मः—एतेषां समा रेखा यस्या हस्ते भवन्ति शङ्खातपत्रकमठा या रेखाः नृपमातृत्वसूचकाः=नृपस्य माता इयं वर्तते—इति सूचयति ॥ ७५ ॥

जिस स्त्री के हाथ में नदी में उत्पन्न होने वाले भँवर के समान दाहिनी ओर को घूमे हुए भ्रमर की रेखा हो तो वह चक्रवर्ती राजा की पत्नी होती है । शङ्ख, छत्र और कच्छप ( कछुआ ) के समान चिह्न हों तो उक्त चिह्नों से वह 'राजा की माँ है'—ऐसी सूचना प्राप्त होती है ॥ ७५ ॥

**तुलामानाकृती रेखे वणिक्पत्नीत्वहेतुके ।**
**गजवाजिवृषाकाराः करे वामे मृगीदृशाम् ॥ ७६ ॥**

तुलामानस्य=तुलायाः धारकस्य दण्डस्येव आकृती ययोस्ते रेखे यस्या हस्ते भवतः सा वणिजः पत्नी भवति । यस्याः हस्ते गज-वाजि-वृषाकाराः=हस्ति-हय-वृषादीनां वामे हस्ते रेखा भवन्ति ( सा तीर्थङ्करं सुतं जनयेत् इति अग्रिमश्लोकेन सह सम्बन्धः ) ॥ ७६ ॥

तराजू की दंडी के समान रेखा हो तो वह स्त्री वणिक् ( बनियाँ ) की पत्नी होती है । जिसके बायें हाथ में हाथी, घोड़े और वृषभ के समान रेखा हो ( तो वह तीर्थंकर पुत्र को जन्म देती है ) ॥ ७६ ॥

**रेखा प्रासादवज्राभा ब्रूयुः तीर्थङ्करं सुतम् ।**
**कृषीवलस्य पत्नी स्याच्छकटेन युगेन वा ॥ ७७ ॥**

तथा प्रासादवज्राभा=प्रासादस्य वज्रस्य च आभेव आभा यस्या सा रेखा यस्याः हस्ते भवेयुः सा तीर्थंकरं=तीर्थंकर्तारम्, सुतम्=पुत्रं जनये-

दिति विद्वांसो ब्रूयुः। यस्या हस्ते शकटेन=यानविशेषेण, युगेन वा रेखा चिह्नेन सा कृषीबलस्य=कृषिकर्मनिरतस्य पत्नी भवेत्॥ ७७॥

और जिसके हाथ में प्रासाद ( महल ) तथा वज्र के समान रेखा हो तो वह स्त्री तीर्थङ्कर पुत्र को ( ज्ञानी ) जन्म देती है—ऐसा शास्त्रकार कहते हैं। शकट ( बैलगाड़ी ) अथवा जुंए के समान रेखा से युक्त स्त्री किसान की पत्नी होती है॥ ७७॥

चामराङ्कुशकोदण्डै राजपत्नी भवेद् ध्रुवम्।
अंगुष्ठमूलान्निर्गत्य रेखा याति कनिष्ठिकाम्॥ ७८॥
यदि, सा पतिहन्त्री स्याद् दूरतस्तां त्यजेत् सुधीः।

चामरः, अङ्कुशः, कोदण्डैः=हस्तस्थितैः=एतच्चिह्नैः, ध्रुवम्=निश्चितम् स्त्री राजपत्नी=पृथ्वीपतेः पत्नी भवेत्। यदि अङ्गुष्ठमूलान्निर्गत्य कनिष्ठिकाम्=कनिष्ठिकापर्यन्तम्, रेखा याति=गच्छति, तर्हि सा स्त्री पतिहन्त्री भवति, तस्याः पतिः न जीवति, अतः सुधीः=विज्ञपुरुषः तां=उक्तरेखायुक्तां स्त्रियं दूरतः त्यजेत् ( तया सह परिणयादिकं न कुर्यात् )॥ ७८॥

जिसके हाथ में चामर ( चँवर ), अङ्कुश, धनुष के समान रेखा हो तो वह निश्चित ही राजा की पत्नी होती है। जिसके हाथ के अंगूठे के मूल से निकल कर कनिष्ठापर्यन्त रेखा हो वह स्त्री पति को मारने वाली होती है। अतः विज्ञ पुरुष ऐसी स्त्री को दूर से ही त्याग दें॥ ७८॥

त्रिशूलादिगदाशक्तिदुन्दुभ्याकृतिरेखया।
नितम्बिनी कीर्तिमती त्यागेन पृथिवीतले॥ ७९॥

त्रिशूलस्य, असेः, गदायाः, शक्तेः, दुन्दुभेश्च आकृतिवत् रेखा यस्याः हस्ते भवेयुः सा नितम्बिनी=स्त्री, पृथ्वीतले=भूतले, त्यागेन=दानादिशुभकार्येण, कीर्तिमती=कीर्तियुक्ता ( भवति )॥ ७९॥

जिस स्त्री के हाथ त्रिशूल, खड्ग, गदा शक्ति और दुन्दुभि के समान रेखा से युक्त हों तो वह दान आदि शुभ कार्यों से पृथ्वी पर कीर्ति को प्राप्त करती है॥ ७९॥

कङ्क-जम्बूक-मण्डूक वृक-वृश्चिकभोगिनः।
रासभोष्ट्रविडालाः स्युः करस्था दुःखदाः स्त्रियाः॥ ८०॥

कङ्कः=लोहपृष्ठः ( श्वेतचील इति पक्षिविशेषः हिन्दीभाषायाम् ) मण्डूकः=दर्दुरः, जम्बुकः=क्रोष्ठा, वृकः=कोकः ( भेड़िया ), वृश्चिकः, भोगी=सर्पश्च

तथा रासभः-खरः, उष्ट्रः, विडालश्च यस्याः करस्था हस्ते इमानि चिह्नानि सन्ति ताः स्त्रियः दुःखदाः-दुःखप्रदा भवन्ति ॥ ८० ॥

श्वेत चील, मेंढ़क, सियार, भेड़िया, बिच्छु, सर्प, गदहा, ऊँट और विलाव ( बिल्ली ) के समान चिह्न हों ऐसी स्त्रियाँ दुःख देने वाली होती हैं ॥ ८० ॥

हस्ताङ्गुष्ठलक्षणम्

**शुभदः सरलोऽगुष्ठो वृत्तो वृत्तनखो मृदुः ॥ ८१ ॥**

सरलः=ऋजुः, वृत्तः-वर्तुलः, वृत्तनखः=वर्तुलनखः, मृदुः-कोमलः, अंगुष्ठः शुभः-कल्याणकारी भवति ॥ ८१ ॥

स्त्रियों का सीधा, गोल, कोमल और गोल नखों वाला अंगूठा शुभ ( कल्याणकारी ) होता है ॥ ८१ ॥

अङ्गुलीनां लक्षणम्

**अङ्गुल्यश्च सुपर्वाणो दीर्घावृत्ताः क्रमात् कृशाः ।**
**चिपिटाः स्थूलपुटा रूक्षाः पृष्ठरोमयुजोऽशुभाः ॥ ८२ ॥**

नारीणामङ्गुल्यः-हस्ताङ्गुल्यः सुपर्वाणः-श्रेष्ठग्रन्थियुक्ताः दीर्घावृत्ताः-दीर्घपर्वयुक्ताः, वृत्ताः=वर्तुलाकाराः, क्रमात् कृशाः-करतलमूलदेशात् नखपर्यन्तं क्रमात् कृशाः=सूक्ष्माः, अङ्गुल्यः, शुभाः कथिताः । चिपिटाः=अङ्गुल्यः स्थूलपुटाः=स्थूलग्रन्थियुक्ताः, रूक्षाः=स्निग्धत्वविहीनाः, पृष्ठरोमयुक्ताः-पृष्ठभागे रोमयुक्ताः अङ्गुल्यः, अशुभाः=अकल्याणकारिण्यो भवन्ति ॥ ८२ ॥

स्त्रियों की सुन्दर पर्व ( पोर ) वाली, बड़े पोरों से युक्त, गोल, क्रमशः हथेली से नख की तरफ को पतली अंगुलियाँ शुभकारी होती हैं । और चिपटी, मोटी, रूखी ( स्निग्धतारहित ) एवं पृष्ठ भाग में रोमों से युक्त अंगुलियाँ अशुभ होती हैं ॥८२॥

**अतिह्रस्वाः कृशा वक्रा विरला रोमहेतुकाः ।**
**दुःखायाऽङ्गुलयः स्त्रीणां बहुपर्वसमन्विताः ॥ ८३ ॥**

अतिह्रस्वाः-अत्यन्तलघवः, कृशाः-क्षीणाः, वक्राः-कुटिलाः, विरलाः=परस्परान्तरालयुक्ताः, रोमहेतुकाः-रोमयुक्ताः, बहुपर्वसमन्विताः-अधिकग्रन्थियुक्ताः स्त्रीणां-नारीणाम्, अङ्गुलयो दुःखाय-कष्टप्रदानाय भवन्ति ॥

अत्यन्त छोटी, पतली, टेढ़ी, छिद्रयुक्त, रोमयुक्त पृष्ठभाग और बहुत गाँठों वाली स्त्रियों की अंगुलियाँ कष्ट देने वाली होती है ॥ ८३ ॥

## नखलक्षणम्

**अरुणाः सशिखास्तुङ्गाः करजाः सदृशाः शुभाः।**
**निम्ना विवर्णाः शुक्त्याभाः पीता दारिद्र्यदायकाः ॥ ८४ ॥**

अरुणाः=रक्तवर्णयुक्ताः, सशिखाः-शिखासहिता इव अग्रभागे कृशाः, तुङ्गाः=मध्योन्नताः, करजा-नखाः, शुभाः=कल्याणप्रदाः। निम्नाः=मध्यभागे निम्नाः, विवर्णाः-अवलोकने अशोभनाः, शुक्त्याभाः-शुक्तिः=नद्यामुत्पन्ना ( सीपी ), तद्वत् श्वेतवर्णाभाः पीताः=पाण्डुरवर्णाः (स्त्रीणां) नखाः दारिद्र्यदायकाः-दारिद्र्यप्रदातारो भवन्ति ॥ ८४ ॥

स्त्रियों के लालवर्णवाले, पतले, शिखा के समान अग्रभाग वाले, मध्यभाग में ऊँचे नख कल्याणकारी होते हैं। और मध्यभाग में नीचे, देखने में असुन्दर, सीपी के समान सफेद और चौड़े अग्रभागवाले पीले रंग के नख दरिद्रता प्रदान करने वाले होते हैं ॥ ८४ ॥

**नखेषु बिन्दवः श्वेताः प्रायः स्युः स्वैरिणीस्त्रियाः।**
**पुरुषा अपि जायन्ते दुःखिनः पुष्पितैर्नखैः ॥ ८५ ॥**

नखेषु-हस्तनखेषु श्वेताः-उज्ज्वलाः बिन्दवः प्रायः-अधिकांशतः स्वैरिण्याः स्वैच्छाचारिण्याः ( पुंश्चल्यः ) स्त्रियः भवेयुः। पुरुषाः=नरा अपि पुष्पितैर्नखैः=श्वेतबिन्दुयुक्तनखैः, दुःखिनः-कष्टयुक्ता जायन्ते ॥ ८५ ॥

श्वेत बिन्दुओं से युक्त नखों वाली स्त्रियां प्रायः पुंश्चली ( स्वेच्छाचारिणी ) होती हैं। श्वेत बिन्दुओं से युक्त नखों वाले पुरुष भी दुःखी होते हैं ॥ ८५ ॥

## पृष्ठस्य लक्षणम्

**अन्तर्निमग्नवंशास्थिः पृष्ठिः स्यान्मांसला शुभा।**
**पृष्ठेन रोमयुक्तेन वैधव्यं लभते ध्रुवम् ॥ ८६ ॥**

अन्तर्निमग्ना-गूढा अन्तर्निमग्नवंशास्थिः-पृष्ठभागस्य मध्यस्थितास्थिः, मांसला-मांसबहुला पृष्ठिः=पृष्ठभागः शुभा-कल्याणप्रदा, स्यात्-भवेत्। रोमयुक्तेन-रोमबहुलेन पृष्ठेन नारी ध्रुवम्-निश्चयेन, वैधव्यम्-पतिराहित्यं लभते-प्राप्नुयात् ॥ ८६ ॥

जिस के पीठ की अस्थि ( मध्यभाग में स्थित रीढ़ की हड्डी ) अन्तर्निहित ( गुप्त ) हो, पृष्ठभाग मांस से युक्त हो तो शुभकारी होता है। रोमयुक्त पीठ वाली स्त्री वैधव्य को प्राप्त होती है—इसमें सन्देह नहीं ॥ ८६ ॥

## कृकाटिकालक्षणम्

**भुग्नेन विनतेनापि ससिरेणापि दुःखिता ।**
**ऋज्वी कृकाटिका श्रेष्ठा समांसा च समुन्नता ॥ ८७ ॥**

भुग्नेन=कुटिलेन, विनतेन=निम्नेन, ससिरेण-शिरांयुक्तेन अपि पृष्ठ-भागेन स्त्री दुःखिता-कष्टेन युक्ता ( भवति ) ! ऋज्वी=सरला, कृकाटिका-घाटा, समांसा=मांसेन युक्ता, समुन्नता-उन्नता च श्रेष्ठा=अतीव शुभा प्रोक्ता ॥ ८७ ॥

जिसकी पीठ ( टेढ़ी ), नीची, नाड़ियों से युक्त हो तो वह स्त्री दुःखी होती है । जिसकी घाटी ( कृकाटिका ) सीधी मांसयुक्त और ऊँची हो तो वह स्त्री कल्याणकारिणी होती है ॥ ८७ ॥

**शुष्का शिराला रोमाढ्या विशाला कुटिला शुभा ।**

शुष्का=रूक्षा, शिराला=नाड़ीयुक्ता, रोमाढ्या=बहुरोमयुक्ता, विशाला=विस्तृता, कुटिला कृकाटिका=घण्टिका, अशुभा-अकल्याणप्रदा भवति ॥

शुष्क ( रूक्ष ) शिराओं से युक्त, बहुत रोमवाली, विशाल, टेढ़ी कृकाटिका=घांटी अशुभ ( अकल्याणकारी ) होती है ॥

## कण्ठस्य लक्षणम्

**मांसलो वर्तुलः कण्ठः प्रशस्तश्चतुरंगुलः ॥ ८८ ॥**

मांसलः=मांसयुक्तः, वर्तुलः-वृत्तः, चतुरंगुलः=अंगुलचतुष्टयपरिमाणः कण्ठः-शिरोधरः, प्रशस्तः=शास्त्रकारैः प्रशंसितः ॥ ८८ ॥

स्त्रियों के मांसयुक्त, गोल, चार अंगुल लम्बे कण्ठ की शास्त्रकारों ने प्रशंसा की है ॥ ८८ ॥

**शस्ता ग्रीवा त्रिरेखाङ्का त्वव्यक्ताऽस्थिसुसंहता ।**
**निर्मांसा चिपिटा दीर्घास्थिपुटा न शुभप्रदा ॥ ८९ ॥**

त्रिरेखाङ्का-रेखात्रययुक्ता अव्यक्तास्थिसुसंहता=गूढास्थियुक्ता, ग्रीवा-स्त्रीणां कण्ठः, शस्ता-प्रशस्ता ! निर्मांसा-मांसरहिता, चिपिटा=अवर्तुला, दीर्घा=लम्बायमानास्थिपुटयुक्ता ग्रीवा, न शुभा-न कल्याण-प्रदा ॥ ८९ ॥

तीन रेखाओं से युक्त गूढ़ अस्थियों वाली ग्रीवा ( गर्दन ) शुभप्रद होती है । मांसरहित, चिपटी, लम्बी और हड्डी से युक्त ग्रीवा शुभकारिणी नहीं होती ॥ ८९ ॥

**स्थूलग्रीवा च विधवा वक्रग्रीवा च किङ्करी ।**
**वन्ध्या हि चिपिटग्रीवा ह्रस्वग्रीवा च निःसुता ॥ ९० ॥**

यस्याः स्थूलग्रीवा-पीवरकण्ठो भवति सा विधवा-विगतो धवो यस्याः सा धवेन=पतिना रहिता भवति । अल्पकालेनैव पतिः स्वर्गगामी भवति । वक्रग्रीवा-कुटिलग्रीवा, किंकरी-दासी ( भवति ) । चिपिटग्रीवा-अवर्तुलग्रीवा वन्ध्या-सन्तानोत्पादनेऽसमर्था ( भवति ) । ह्रस्वग्रीवा-अतीव लघुग्रीवा-युक्ता स्त्री निःसुता-संतानरहिता, पुत्ररहिता वा भवति ॥ ९० ॥

मोटी गर्दन वाली स्त्री विधवा होती है । टेढ़ी गर्दन वाली स्त्री दासी होती है । चिपटी गर्दन वाली वन्ध्या होती है, और बहुत छोटी गर्दन वाली स्त्री सन्तान-रहित होती है ॥ ९० ॥

### चिबुकस्य लक्षणम्

**चिबुकं द्व्यङ्गुलं शस्तं वृत्तं पीनं सुकोमलम् ।**
**स्थूलं द्विधा सुविभक्तमायतं रोमशं त्यजेत् ॥ ९१ ॥**

चिबुकम्-ओष्ठस्याधोभागः द्व्यंगुलम्-द्व्यंगुलपरिमाणविस्तृतम्, वृत्तम्-वर्तुलम्, पीनम्-सुकोमलम्-सुमृदु, शास्त्रकारैः शस्तम्=प्रशस्तम् । स्थूलं-द्विधा सुविभक्तम्, आयतम्-विशालं, रोमशम्=रोमयुक्तं चिबुकं त्यजेत् ॥ ९१ ॥

दो अंगुल वाले गोल, पुष्ट और कोमल चिबुक (अधरोष्ठ से नीचे का भाग=ठोडी) प्रशस्त कहे गये हैं । मोटी, दो विभाग वाली चौड़ी, रोमों से युक्त चिबुक (वाली स्त्री) अशुभ है—इसलिए उसका त्याग कर देना चाहिए ॥ ९१ ॥

### हनुलक्षणम्

**हनुश्चिबुकसंलग्ना निर्लोमा सुघना शुभा ।**
**वक्रा स्थूला कृशा ह्रस्वा रोमशा न शुभप्रदा ॥ ९२ ॥**

निर्लोमा-रोमरहिता, सुघना-निविडा, चिबुकसंलग्ना=चिबुकस्य सन्निकटे स्थिता, हनुः-शुभा-कल्याणप्रदा । वक्रा-कुटिला, स्थूला=पीवरा, कृशा-क्षीणा, ह्रस्वा-लघुकाययुक्ता, रोमशा-रोमयुक्ता स्त्रीणां हनुः न शुभ-प्रदा-न कल्याणप्रदा भवति ॥ ९२ ॥

रोमरहित, घनी चिबुक ठोढ़ी ( स्त्रियों के लिए ) शुभप्रद होती है । टेढ़ी, मोटी, अत्यन्त कृश, छोटे रोमों से युक्त स्त्रियों की हनु कल्याणकारी नहीं होती ॥ ९२ ॥

## कपोललक्षणम्

**शस्तौ कपोलौ वामाक्ष्याः पीनौ वृत्तौ समुन्नतौ ।**
**रोमशौ परुषौ निम्नौ निर्मांसौ परिवर्जयेत् ॥ ९३ ॥**

पीनौ=स्थूलौ, वृत्तौ=वर्तुलाकारौ, समुन्नतौ=साधुतया उन्नतौ, वामाक्ष्याः=स्त्रियः कपोलौ=गण्डौ, शस्तौ=प्रशस्तौ। रोमशौ=रोमयुक्तौ, परुषौ=कठोरौ, निम्नौ=अनुन्नतौ, निर्मांसौ=मांसरहितौ, स्त्रीणां कपोलौ, न शस्तौ=न प्रशस्तौ। अतः एतां परिवर्जयेत्=एतादृशी स्त्रीं न गृह्णीयात् ॥९३॥

स्त्रियों के मोटे, गोल, भली प्रकार से उन्नत कपोल ( गाल ) प्रशस्त ( प्रशंसनीय एवं कल्याणकारी ) कहे गये हैं। और रोमों से युक्त कठोर निम्न, मांसरहित, कपोल अशुभ कहे गये हैं। अतः विज्ञों को चाहिए कि ऐसी स्त्रियों का ग्रहण न करें ॥९३॥

## मुखलक्षणम्

**समं समांसं सुस्निग्धं स्वामोदं वर्तुलं मुखम् ।**
**जनितृवदनच्छायं धन्यानामिह जायते ॥ ९४ ॥**

समं=समानम् समांसम्=मांसयुक्तम्, सुस्निग्धम्=चिक्कणम्, स्वामोदम्=सुन्दरेण आमोदेन सुगन्धेन युक्तम्, वर्तुलम्=वर्तुलाकारम्, जनितृवदनच्छायम्=पितृमुखतुल्यं स्त्रीणां मुखं धन्यानां=सौभाग्ययुक्तानां जायते। सर्वासां न जायते इत्यर्थः ॥ ९४ ॥

भाग्यशाली स्त्री का मुख समान, मांस से भरा हुआ, सुन्दर, स्निग्धता से युक्त, सुन्दर गन्धवाला, गोल और पिता के मुख के समान होता है अर्थात् पिता के मुख के समान मुख वाली स्त्री धन्य होती है ॥ ९४ ॥

## ओष्ठलक्षणम्

**पाटलो वर्तुलः स्निग्धो लेखाभूषितमध्यभूः ।**
**सीमन्तिनीनामधरो धराजानिप्रियो भवेत् ॥ ९५ ॥**

पाटलः=श्वेतरक्तः, वर्तुलः=वर्तुलाकारः, स्निग्धः=चिक्कणः, लेखाभूषितमध्यभूः=लेखया=रेखया भूषिता=सुशोभिता, मध्यभूः=मध्यभागो यस्याः सा तथा सीमन्तिनीनाम्=सीमन्तः=केशवेषः, सोऽस्ति यासां तासां स्त्रीणाम्, अधरः=अधरोष्ठः, धराजानिप्रियः=भूपालप्रियो भवेत् ॥ ९५ ॥

स्त्रियों के सफेदी मिली लालिमा से युक्त, गोल, चिकने और रेखा से सुशोभित मध्यभाग वाले अधरोष्ठ राजाओं को प्रिय होते हैं ( अर्थात् ऐसे ओठों वाली स्त्री राजप्रिया होती है ) ॥ ९५ ॥

कृशः प्रलम्बस्फुटितो रूक्षो दौर्भाग्यसूचकः ।
श्यावः स्थूलोऽधरोष्ठः स्याद् वैधव्यकलहप्रदः ।। ९६ ।।

कृशः=क्षीणः, प्रलम्बः=लम्बायमानः, स्फुटितः=प्रस्फुटितः=त्रुटितः, रूक्षः=अस्निग्धोऽधरोष्ठो दौर्भाग्यसूचकः='दुर्भगा इयं भविष्यति' इति सूचकः ।

श्यावः=कपिशः, स्थूलः=पीवरः, अधरोष्ठः वैधव्यकलहप्रदः=वैधव्यस्य कलहस्य च प्रदाता भवति ।। ९६ ।।

कृश ( पतला ), लम्बा, प्रस्फुटित=( फूटा ) हुआ, रूखा, नीचे का ओठ दुर्भाग्य का सूचक होता है ।

फीके रंग का मोटा अधरोष्ठ वैधव्य एवं कलह का सूचक होता है ।। ९६ ।।

उत्तरोष्ठस्य लक्षणम्

मसृणो मत्तकाशिन्याश्चोत्तरोष्ठः शुभोऽगदः ।
किञ्चिन्मध्योन्नतोऽरोमा विपरीतो विरुद्धकृत् ।। ९७ ।।

मत्तकाशिन्याः=वराङ्गनायाः नार्याः उत्तरोष्ठः=उपरितन ओष्ठः, मसृणः=स्निग्धः, किञ्चिन्मध्योन्नतः=मध्यभागे किञ्चित् उन्नतः, अरोमा=रोमरहितः, शुभः=कल्याणप्रदः, अगदः=अरोगकरश्च भवति । विपरीतः=उक्तलक्षणरहितः, विरुद्धकृत्=विपरीतफलदायको ( अशुभफलदायको ) भवति ।। ९७ ।।

नारी का ऊपर का ओठ स्निग्ध ( चिकना ), कुछ मध्य में ऊँचा, रोमरहित हो तो कल्याणकारी और आरोग्यप्रद होता है । इसके विपरीत रूखा मध्यभाग निम्न, रोमयुक्त अशुभ एवं रोगकारक होता है ।। ९७ ।।

दन्तलक्षणम्

गोक्षीरसन्निभाः स्निग्धा द्वात्रिंशद्दशनाः शुभाः ।
अधस्तादुपरिष्टाच्च समाः स्तोकसमुन्नताः ।। ९८ ।।

गोक्षीरसन्निभाः=गोदुग्धवदुज्ज्वलाः, स्निग्धाः=चिक्कणाः, अधस्तात्=अधोभागात्, उपरिष्टात्=उपरिभागात्, समाः=समानाः, स्तोकसमुन्नताः=स्वल्पसमुन्नताः, द्वात्रिंशत्= एतत्संख्याकाः, दशनाः=दन्ताः, शुभाः=कल्याणप्रदा ज्ञेयाः ।। ९८ ।।

गाय के दूध के समान उज्ज्वल, चिकने, ऊपर और नीचे के समान, कुछ उन्नत, स्त्रियों के बत्तीस (३२) दांत शुभकारी होते हैं ।। ९८ ।।

**पीताः श्यावाश्च दशनाः स्थूला दीर्घा द्विपङ्क्तयः ।**
**शुक्त्याकाराश्च विरला दुःखदौर्भाग्यकारणम् ॥ ९९ ॥**

पीताः=पीतवर्णयुक्ताः, श्यावाः=कपिशाः, स्थूलाः=पीवराः, दीर्घाः=लम्बायमाना, द्विपंक्तयः=द्विपंक्तियुक्ताः, शुक्त्याकाराः=शुक्तितुल्याकारवन्तः, विरलाः=छिद्रयुक्ताः ( सन्धियुक्ताः ) दन्ताः दुःखदौर्भाग्यकारणम्=दुःखस्य=कष्टस्य, दौर्भाग्यस्य=दुष्टभाग्यस्य जनका भवन्ति ॥ ९९ ॥

पीले और फीके रंग वाले, मोटे. लम्बे, दो पंक्तिवाले और शुक्ति के समान विरले दांत तथा दौर्भाग्य के कारण होते हैं ॥ ९९ ॥

**अधस्तादधिकैर्दन्तैर्मातरं भक्षयेत् स्फुटम् ।**
**पतिहीना च विकटैः कुलटा विरलैर्भवेत् ॥ १०० ॥**

अधस्तात्=अधोभागात् उपरिभागे अधिकैः दन्तैः, मातरं=जननीं भक्षयेत् ( तस्या माता तामुत्पाद्य म्रियेत ) विकटैः=भयङ्करैः, दन्तैः, पतिहीना=पतिरहिता भवति । विरलैः=सच्छिद्रैः दन्तैः, स्त्री कुलटा=व्यभिचारिणी भवति ॥ १०० ॥

नीचे के भाग से ऊपर के भाग में अधिक दांत वाली स्त्री अपनी माता को पैदा होते ही खा जाती है ( अर्थात् माता मर जाती है ) । देखने में भयंकर दांतों वाली स्त्री पति से रहित होती है । जिसके दांत विरले होते हैं ( अर्थात् दो दांतों के बीच में सन्धि होती है ) वह स्त्री कुलटा ( व्यभिचारिणी ) होती है ॥ १०० ॥

जिह्वालक्षणम्

**जिह्वेष्टमिष्टभोक्त्री स्याच्छोणा मृद्वी तथा सिता ।**
**दुःखाय मध्यसङ्कीर्णा पुरोभागसविस्तरा ॥ १०१ ॥**

शोणा=रक्तवर्णा, मृद्वी=कोमला, तथा सिता=उज्ज्वला, जिह्वा=रसना, इष्टस्य=अभिलषितस्य, मिष्टस्य=मिष्टान्नस्य भोक्त्री, स्यात्=भवेत् । मध्यसङ्कीर्णा=मध्यभागे सङ्कीर्णा, पुरोभागसविस्तरा=अग्रभागे विस्तारयुक्ता, रसना, दुःखाय=दुःखप्रदानाय भवति ॥ १०१ ॥

लालवर्ण, कोमल तथा श्वेत जिह्वावाली स्त्री अभिलषित मीठा खानेवाली होती है । जिसकी जीभ का मध्यभाग पतला और आगे का भाग चौड़ा हो तो वह दुःख प्रदान करती है ॥ १०१ ॥

**सितया तोयमरणं श्यामया कलहप्रिया ।**
**दरिद्रा मांसलतया लम्बयाऽभक्ष्यभक्षिणी ॥ १०२ ॥**

सितया=श्वेतजिह्वया, तोयमरणम्=तोये=जले मरणं भवति, श्यामया=कृष्णजिह्वया कलहप्रिया=वाग्युद्धप्रिया भवति, मांसलया=स्थूलजिह्वया दरिद्रिणी भवति, लम्बया=लम्बायमानया जिह्वया अभक्ष्यभक्षिणी=अभक्ष्यपदार्थानां भक्षिणी भवति ॥ १०२ ॥

सफेद जिह्वावाली जल में मृत्यु प्राप्त करती है, काली जिह्वा वाली कलहप्रिय होती है, मोटी जिह्वा वाली दरिद्र होती है और लम्बी जिह्वा वाली अभक्ष्यभक्षिणी ( अखाद्य पदार्थों उच्छिष्टादि पदार्थों को खाने वाली ) होती है ॥ १०२ ॥

**विशालया रसनया प्रमदातिप्रमादभाक् ।**

विशालया=अतिविस्तृतया, रसनया=जिह्वया प्रमदा=स्त्री अतिप्रमादभाक्=अत्यन्तानवधानयुक्ता भवति ।

अत्यन्त विस्तृत जिह्वा वाली स्त्री कर्तव्य के प्रति ध्यान न देने वाली होती है ॥

### तालुलक्षणम्

**स्निग्धं कोकनदाभासं प्रशस्तं तालु कोमलम् ॥ १०३ ॥**

तालुलक्षणं कथयति=स्निग्धम्=चिक्कणम्, कोकनदाभासं=रक्तकमलवदाभासम्, कोमलम्=मृदुतालु=मुखस्याभ्यन्तरे स्थित उपरितनो भागः, प्रशस्तं=श्रेष्ठं भवति ॥ १०३ ॥

अब तालु के लक्षण कहते हैं—चिकना, लाल कमल के समान आभा वाला और कोमल तालु श्रेष्ठ कहा गया है ॥ १०३ ॥

**सिते तालुनि वैधव्यं पीते प्रव्रजिता भवेत् ।**
**कृष्णेऽपत्यवियोगार्ता रूक्षे भूरिकुटुम्बिनी ॥ १०४ ॥**

सिते=श्वेते तालुनि, वैधव्यम्=पतिराहित्यं भवति, पीते=पीतवर्णे तालुनि, प्रव्रजिता=संन्यासिनी ( विरागयुक्ता ) भवति । कृष्णे=श्यामे तालुनि अपत्यवियोगार्ता=सन्तानवियोगेन दुःखिनी भवति । रूक्षे=शुष्के तालुनि, भूरिकुटुम्बिनी=बृहत्कुटुम्बयुक्ता भवति ॥ १०४ ॥

सफेद तालु वाली स्त्री विधवा होती है। पीले तालु वाली वियोगिनी ( संन्यासिनी ) होती है। काले तालु वाली सन्तानवियोग से दुःखी होती है। रूखे ( शुष्क ) तालु वाली बड़े कुटुम्बवाली होती है ॥ १०४ ॥

### घाटालक्षणम्

**कण्ठे स्थूला सुवृत्ता च क्रमतीक्ष्णा सुलोहिता ।**
**अप्रलम्बा शुभा घाटा स्थूला कृष्णा च दुःखदा ॥ १०५ ॥**

कण्ठे=गलदेशे, स्थूला=पीवरा, सुवृत्ता=सुवर्तुला, क्रमतीक्ष्णा=क्रमेण तीक्ष्णा, सुलोहिता=सुरक्ता, अप्रलम्बा=ह्रस्वा, घाटा=कृकाटिका, शुभा भवति। स्थूला=अतिस्थूला, कृष्णा च घाटा दुःखदा भवति ॥ १०५ ॥

गले में मोटी, गोल, क्रम से आगे तीखी ( पतली ); लाल, छोटी घाँटी शुभकारी होती है। विशेष मोटी काली घाँटी दुःख देने वाली होती है ॥ १०५ ॥

## स्मितलक्षणम्

**अलक्षितद्विजं किञ्चित् किञ्चित् फुल्लकपोलकम्।**
**स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् ॥ १०६ ॥**

किञ्चित्=स्वल्पम्, अलिक्षतद्विजम्=अदृष्टदन्तम्, किञ्चित्=स्वल्पं फुल्लकपोलकम्=उत्फुल्लकपोलकम्, अनिमीलितलोचनम्=अपिहितनेत्रम्, सुदृशाम्=कामिनीनां, स्मितम्=ईषद् हसितम्, प्रशस्तम्=प्रशंसितम् ( शास्त्रकारैरिति शेषः ) ॥ १०६ ॥

हँसते समय दांत कम दिखाई पड़ें, गाल थोड़े फूले हों, और नेत्र बन्द न हों—स्त्रियों का ऐसा हंसना ( मुस्कुराना ) श्रेष्ठ होता है ॥ १०६ ॥

## नासालक्षणम्

**समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा।**
**स्थूलाग्रा मध्यनिम्ना च न प्रशस्ता समुन्नता ॥ १०७ ॥**

समवृत्तपुटा=समानवर्तुलविवरयुक्ता, तथा लघुच्छिद्रा शुभावहा=ह्रस्वछिद्रयुक्ता नासा=नासिका कल्याणप्रदा। स्थूलाग्रा=पीवराग्रा, मध्यनिम्ना, समुन्नता=विशेषोन्नता ( नासा ) न प्रशस्ता=न श्रेष्ठा भवति ॥ १०७ ॥

बराबर, गोल विवरों वाली या छोटे छिद्र वाली नासा ( नाक ) कल्याणप्रद होती है। आगे के भाग में विशेष स्थूल ( मोटी ), मध्य भाग में नीची और विशेष ऊँची नाक कल्याणप्रद नहीं होती ॥ १०७ ॥

**आकुञ्चिताऽरुणाग्रा च वैधव्यक्लेशदायिनी।**
**परप्रेष्या च चिपिटा ह्रस्वा दीर्घा कलिप्रिया ॥ १०८ ॥**

आकुञ्चिता=भुग्ना, अरुणाग्रा=रक्ताग्रा नासा, वैधव्यक्लेशदायिनी=वैधव्यादिविविधकष्टदायिनी भवति। चिपिटनासायुक्ता, परप्रेष्या=परस्य=अपरस्य दूती भवति, ह्रस्वा=अत्यन्तह्रस्वा दीर्घा=अत्यन्तविस्तृता नासा, कलिप्रिया=कलहप्रियत्वसूचिका भवति ॥ १०८ ॥

टेढ़ी नाक, जिसका अग्रभाग लाल हो ऐसी स्त्री वैधव्यादि अनेक कष्टों को प्राप्त करती है। चिपटी नाक वाली दूती होती है, विशेष छोटी या बड़ी नाक वाली स्त्री झंझट-झगड़ा करने वाली होती है ॥ १०८ ॥

छिक्कालक्षणम्

**दीर्घायुष्कृत्क्षुतं दीर्घं युगपद् द्वित्रिपिण्डितम् ॥**

दीर्घम्=दीर्घस्वरसहितम्, युगपत्=सहैव, द्वित्रिपिण्डितम्=द्वित्रिवारमुत्पन्नं क्षुतम्=छिक्का, दीर्घायुष्कृत्=चिरायुष्कारकं भवति ॥

जिस स्त्री को एक साथ दो तीन बार तेज आवाज के साथ छिक्का होती है वह स्त्री दीर्घजीवी होती है ॥

नेत्रलक्षणम्

**ललनालोचने शस्ते रक्तान्ते कृष्णतारके ॥ १०९ ॥**

रक्तान्ते=रक्तापाङ्गे, कृष्णतारके=श्यामकनीनिके, ललनाचोचने=प्रमदायाः नेत्रे, शस्ते=प्रशंसिते ॥ १०९ ॥

स्त्री के लाल कोणों वाले, और काली पुतली वाले नेत्र प्रशंसनीय होते हैं ॥

**गोक्षीरवर्णविशदे सुस्निग्धे कृष्णपक्ष्मणी ।**
**उन्नताक्षी न दीर्घायुर्वृत्ताक्षी कुलटा भवेत् ॥ ११० ॥**

गोक्षीरवर्णविशदे=गोदुग्धवद् धवलवर्णे, विशदे=विस्तृते, सुस्निग्धे=चिक्कणे, कृष्णपक्ष्मणी=श्यामपक्ष्मयुक्ते नेत्रे, शस्ते=प्रशस्ते। उन्नताक्षी=उन्नतनेत्रयुता स्त्री, दीर्घायुः=चिरायुः न भवति। वृत्ताक्षी=वर्तुलाक्षी, कुलटा=पुंश्चली ( परपुरुषरता ) भवेत् ॥ ११० ॥

स्त्री के गोदुग्ध के समान उज्ज्वल, विशाल, स्नेहिल तथा काली वरौनी ( नेत्ररोम ) से युक्त नेत्र शुभकारी होते हैं।

ऊँचे नेत्रों वाली स्त्री दीर्घायु नहीं होती। गोल नेत्रों वाली स्त्री कुलटा ( व्यभिचारिणी ) होती है ॥ ११० ॥

**मेषाक्षी महिषाक्षी च केकराक्षी न शोभना ।**
**कामगृहीता नितरां गोपिङ्गाक्षी सुदुर्वृता ॥ १११ ॥**

मेषाक्षी=मेषस्य अक्षिणी यस्याः सा=एडाक्षी, महिषाक्षी=महिषस्येव अक्षिणी यस्याः सा, केकराक्षी=केकरः=बलीरः, तस्य अक्षिणी=नेत्रे इव अक्षिणी यस्याः सा, न शोभना=उत्तमा न भवति। गोपिङ्गाक्षी=गोरिव पिंगाक्षी=पीतवर्णनेत्रा स्त्री नितराम्=अत्यधिकं कामेन=कामदेवेन गृहीता=

अतिशयकामयुक्ता, अतः प्रतिदिनं कामक्रीडायां सम्पृक्ता, तथा सुदुर्वृता=विशेषरूपेण दुश्चरित्रा भवति ॥ १११ ॥

भेड़ या भैंस के समान नेत्रयुक्त और एक भौं को ऊँचा और दूसरी भौं को नीचा करके देखने वाली ( ऐंचकर देखने वाली स्त्री ) शुभ नहीं होती अर्थात् कल्याणप्रद नहीं होती। गाय के समान पिंगलवर्ण वाले नेत्रों से युक्त स्त्री अत्यन्त कामायुक्त होती है तथा दुष्टचरित्र वाली होती है ॥ १११ ॥

**पारावताक्षी दुःशीला रक्ताक्षी भर्तृघातिनी।**
**कोटरानयना दुष्टा गजनेत्रा न शोभना॥ ११२ ॥**

पारावताक्षी=कपोताक्षी, दुःशीला=दुष्टस्वभावयुक्ता ( व्यभिचारिणी ) रक्ताक्षी=रक्तनेत्रयुता, भर्तृघातिनी भवति=पतिं विनाशयति। कोटरानयना=कोटरम्=निष्कूहः, तद्वत् नयने यस्याः सा दुष्टा=दुष्टस्वभावा। गजनेत्रा=हस्तिनेत्रवद् नेत्रे यस्याः सा, न शोभना=न कल्याणकर्त्री भवति॥

कबूतर के समान नेत्रों वाली स्त्री व्यभिचारिणी होती है, लाल नेत्रों वाली पतिहन्त्री ( पति को मारने वाली ) होती है। कोटरनयना ( वृक्ष के खोह के समान नेत्रों वाली ) स्त्री दुष्टस्वभाव होती है और हाथी के नेत्रों के समान नेत्रों वाली स्त्री कल्याणकारी नहीं होती ॥ ११२ ॥

**पुंश्चली वामकाणाक्षी वन्ध्या दक्षिणकाणिका।**
**मधुपिङ्गलाक्षी रमणी धनधान्यसमृद्धिभाक्॥ ११३ ॥**

वामकाणाक्षी=वामनेत्रेण या काणा सा पुंश्चली=व्यभिचारिणी भवति। दक्षिणकाणिका=दक्षिणनेत्रेण या काणिका सा बन्ध्या=सन्तानोत्पादेन असमर्था। मधुपिङ्गाक्षी=मधु इव पिंगलवर्णे अक्षिणी यस्याः सा रमणी=स्त्री, धनधान्यसमृद्धिभाक्=धनस्य धान्यस्य समृद्धेश्च स्थानं भवति॥ ११३ ॥

वाम नेत्र से कानी स्त्री व्यभिचारिणी होती है। दाहिने नेत्र से कानी स्त्री वन्ध्या होती है। शहद के समान पिंगल नेत्रों वाली स्त्री धन-धान्य तथा समस्त समृद्धियों की खान होती है ॥ ११३ ॥

### पक्ष्मणो लक्षणम्

**पक्ष्मभिः सुघनैः स्निग्धैः कृष्णैः सूक्ष्मैः सुभाग्यभाक्।**
**कपिलैर्विरलैः स्थूलैर्निन्द्या भवति भामिनी॥ ११४ ॥**

सुघनैः=सान्द्रैः, स्निग्धैः=चिक्कणैः, कृष्णैः=श्यामैः, सूक्ष्मैः=न स्थूलैः, पक्ष्मभिः=नेत्ररोमैः, स्त्री सुभाग्यभाक्=सौभाग्यवती भवति। कपिलैः=धूम्रैः,

विरलैः=न घनैः, स्थूलैः=सान्द्रैः, पक्ष्मभिः=नेत्ररोमैः, भामिनी=स्त्री, निन्दया =निन्दनीया भवति ॥ ११४ ॥

सुन्दर, घनी, चिकनी, काली, सूक्ष्म ( पतली ) पक्ष्म ( नेत्रों के रोम ) युक्त आंख की बरौनी वाली स्त्री सुन्दर भाग्य वाली होती है। भूरी, विरल, मोटी बरौनी वाली स्त्री निन्दनीया होती है ॥ ११४ ॥

भ्रूलक्षणम्

भ्रुवौ सुवर्तुले तन्व्याः स्निग्धे कृष्णे असंहते ।
प्रशस्ते मृदुरोमाणौ सुभ्रुवः कार्मुकाकृती ॥ ११५ ॥

सुवर्तुले=सुवृत्ते, स्निग्धे=चिक्कणे, कृष्णे=श्यामे, असंहते=न मिलिते, मृदुरोमाणौ=कोमलरोमयुक्ते, कार्मुकाकृती=धनुषाकृती, सुभ्रुवः=तन्व्याः स्त्रियाः, भ्रुवौ प्रशस्ते ॥ ११५ ॥

स्त्रियों की गोल, स्निग्ध, काली, आपस में न मिली हुई, कोमल रोमों से युक्त, धनुष के समान झुकी हुई ( टेढी ) भ्रू ( भौंवें ) प्रशस्त श्रेष्ठ होती है ॥ ११५ ॥

खररोमा च पृथुला विकीर्णा सरला स्त्रियाः ।
न भ्रूः प्रशस्ता मिलिता दीर्घरोमा च पिङ्गला ॥ ११६ ॥

खररोमा=परुषरोमा, पृथुला=स्थूला, विकीर्णा=सरला, मिलिता=संहता, दीर्घरोमा=लम्बायमानरोमवती, पिङ्गला=पिङ्गलवर्णा, स्त्रियाः भ्रूः न प्रशस्ता=न उत्तमा ॥ ११६ ॥

कठोर रोमों वाली, मोटी, बिखरी हुई, सीधी, आपस में मिली हुई, लम्बे रोम और भूरे रंग वाली स्त्रियों की भौंहें उत्तम श्रेष्ठ नहीं होतीं ॥ ११६ ॥

कर्णलक्षणम्

लम्बकर्णौ शुभावर्तौ सुखदौ च शुभप्रदौ ।
शष्कुलीरहितौ निन्द्यौ सिरालौ कुटिलौ कृशौ ॥ ११७ ॥

शुभावर्तौ=शुभभ्रमराकारयुक्तौ, लम्बकर्णौ=दीर्घकर्णौ, सुखदौ=सुखप्रदौ, शुभप्रदौ=कल्याणप्रदौ च भवतः। शष्कुलीरहितौ=कर्णच्छिद्ररहितौ, शिरालौ=शिरायुक्तौ, कुटिलौ, कृशौ=दुर्बलौ ( ह्रस्वौ ) कर्णौ, निन्द्यौ=निन्दनीयौ, भवतः ॥ ११७ ॥

स्त्री के शुभ भ्रमरयुक्त लम्बे कान सुख और कल्याण देने वाले होते हैं। छिद्ररहित नाड़ियों वाले, टेढे, दुर्बल, छोटे कान निन्दनीय होते हैं ॥ ११७ ॥

भाललक्षणम्

**भालः शिराविरहितो निर्लोमाऽर्धेन्दुसन्निभः।**
**अनिम्नस्त्र्यंगुलो नार्याः सौभाग्यारोग्यकारणम् ॥ ११८ ॥**

शिराविरहितः=नाड़ीरहितः, निर्लोमः=रोमरहितः, अर्धेन्दुसन्निभः=अर्धचन्द्रसमः, अनिम्नः=निम्नतारहितः त्र्यंगुलः=त्र्यंगुलविस्तृतः, नार्याः भालः=ललाटः, सौभाग्यारोग्यकारणम्=सौभाग्यस्य, आरोग्यस्य च कारणं भवति ॥ ११८ ॥

स्त्री का नाड़ीरहित, रोमरहित, तीन अंगुल ऊँचा चौड़ा मस्तक सौभाग्य और रोगरहित होने का सूचक होता है ॥ ११८ ॥

**व्यक्तस्वस्तिकरेखं च ललाटं राज्यसम्पदे।**
**प्रलम्बं मस्तकं यस्याः देवरं हन्ति सा ध्रुवम् ॥ ११९ ॥**

व्यक्तस्वस्तिकरेखम्=स्पष्टरूपेण स्वस्तिकचिह्नयुक्तं ललाटम्-भालम्, राज्यसम्पदे-राज्यस्य सम्पत्तेश्च प्रापकं भवति। प्रलम्बम्=अत्यधिकं लम्बायमानं, मस्तकम्=ललाटं यस्या नार्या भवति सा देवरम्=पत्युरनुजम्, ध्रुवम्=निश्चयेन, हन्ति-नाशयति ॥ ११९ ॥

**रोमशेन शिरालेन प्रांशुना रोगिणी मता ॥ १२० ॥**

रोमशेन=रोमयुक्तेन, शिरालेन-नाडीयुक्तेन प्रांशुना=दीर्घेण, ललाटेन स्त्री रोगिणी=रोगयुक्ता भवति ॥ १२० ॥

रोम और नाड़ी से युक्त, लम्बे मस्तक वाली स्त्री रोगिणी होती है ॥ १२० ॥

सीमन्तलक्षणम्

**सीमन्तः सरलः शस्तो मौलिः शस्तः समुन्नतः।**
**गजकुम्भनिभो वृत्तः सौभाग्यैश्वर्यसूचकः ॥ १२१ ॥**

सरलः=ऋजुः, सीमन्तः=सिन्दूरदानस्थानम्, शस्तः=प्रशस्तः। समुन्नतः=उन्नतः, मौलिः=मस्तकः, शस्तः=प्रशस्तः। गजकुम्भनिभः=हस्तिगण्डस्थल इव वृत्तः=वर्तुलः, मौलिः-मस्तकः, सौभाग्यैश्वर्यसूचकः-सौभाग्यस्य ऐश्वर्यस्य च परिचायको भवति ॥ १२१ ॥

स्त्री का सीधा सीमन्त (सिन्दूर लगाने का स्थान) श्रेष्ठ होता है। स्त्री का उन्नत मस्तक श्रेष्ठ कहा गया है। हाथी के मस्तक के समान स्त्री का मस्तक सौभाग्य और ऐश्वर्य का सूचक होता है ॥ १२१ ॥

### शिरसो लक्षणम्

**स्थूलमूर्ध्नी च विधवा दीर्घशीर्षा च बन्धकी ।**
**विशालेनापि शिरसा भवेद् दौर्भाग्यभाजनम् ॥ १२२ ॥**

स्थूलमूर्ध्नी—पीवरशिरसा, स्त्री विधवा भवति, दीर्घशीर्षा=प्रांशुशिरोवती, बन्धकी=व्यभिचारिणी भवति । विशालेनापि=विस्तृतेनापि, शिरसा दौर्भाग्यस्य भाजनं भवति ॥ १२२ ॥

मोटे शिर वाली विधवा, लम्बे शिर वाली व्यभिचारिणी और बड़े शिर वाली स्त्री दौर्भाग्ययुक्त होती है ॥ १२२ ॥

### केशलक्षणम्

**केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः ।**
**किञ्चिदाकुञ्चिताग्राश्च कुटिलाश्चातिशोभनाः ॥ १२३ ॥**

अलिकुलच्छायाः=अलिः=भ्रमरस्तस्य कुलस्य=समूहस्य छाया इव छाया येषां ते सूक्ष्माः-न तु स्थूलाः, स्निग्धाः=चिक्कणाः, सुकोमलाः=मृदवः, किञ्चित्=ईषत् आकुञ्चिताग्राश्च आकुञ्चितः=कुण्डलीयुक्तः अग्रभागो येषां ते कुटिलाश्च केशाः=मूर्धजाः, स्त्रीणामतिशोभनाः=अत्यन्तशुभकारिणो भवन्ति ॥ १२३ ॥

जिस स्त्री के केश भ्रमर के समान श्याम ( काले ), सूक्ष्म ( पतले ), स्निग्ध, कोमल, कुण्डल के समान अग्रभाग वाले, घूमे हुए और कुटिल ( टेढ़े ) हों वे अत्यन्त कल्याणकारी होते हैं ॥ १२३ ॥

**परुषाः कुटिलाग्राश्च विरलाश्च शिरोरुहाः ।**
**पिङ्गला लघवो रूक्षा दुःखदारिद्र्यबन्धनाः ॥ १२४ ॥**

परुषाः=अकोमलाः, कुटिलाग्राश्च=अग्रभागे कुटिलाः, विरलाः=अघनाः, पिङ्गला-धूम्रवर्णाः, लघवः=ह्रस्वाः, रूक्षाः-शुष्काः, शिरोरुहाः=मूर्धजाः, ( केशाः ) दुःखदारिद्र्यबन्धनाः=दुःखस्य=कष्टस्य, दारिद्र्यस्य च बन्धनं येषु ते भवन्ति ॥ १२४ ॥

कठोर ( कड़े ) टेढ़े अग्रभाग वाले, विरल भूरे रंग के छोटे रूखे स्त्रियों के शिर के बाल दुःख, दरिद्रता और बन्धन में डालने वाले होते हैं ॥ १२४ ॥

### मशकस्य तिलस्य च लक्षणे

**भ्रुवोरन्तर्ललाटे वा मशको राज्यसूचकः ।**
**वामे कपोले मशकः शोणो मिष्टान्नदः स्मृतः ॥ १२५ ॥**

भ्रुवोरन्तर्ललाटे वा=भ्रुवोरन्तर्मध्ये ललाटे मस्तके वा=अथवा मशकः=चिह्नविशेषः, राज्यसूचकः=राज्यप्राप्तेः सूचको भवति। स्त्रीणां वामकपोले=वामगण्डस्थले, शोणः=रक्तवर्णो मशकः, मिष्टान्नदः=मधुरान्नप्रदाता स्मृतः=कथितः ॥ १२५ ॥

स्त्रियों के भ्रुवों के मध्य में अथवा माथे में मस्सा राज्य प्रदान करने वाला होता है। बायें गाल पर लाल मस्सा या तिल मीठे-मीठे पदार्थ खाने को देता है (अर्थात् ऐसी स्त्री मीठे पदार्थ अधिक प्राप्त करती है)॥ १२५ ॥

**तिलकं लाञ्छनं वापि हृदि सौभाग्यकारणम्।**
**यस्या दक्षिणवक्षोजे शोणे तिलकलाञ्छने ॥ १२६ ॥**

**कन्याचतुष्टयं सूते सूते सा च सुतत्रयम्।**

हृदि=हृदये तिलकं=तिलम्, लाञ्छनम्=चिह्नं वा=अथवा सौभाग्यकारणम्=सौभाग्यस्य कारणं भवति। यस्याः दक्षिणे वक्षोजे=स्तने, शोणे=कोकनदच्छवी रक्तवर्णे तिलकलाञ्छने तिलकं चिह्नं च भवति सा=स्त्री कन्याचतुष्टयं सुतत्रयं च सूते=उत्पादयति ॥ १२६ ॥

स्त्री के हृदय में तिल का चिह्न सौभाग्य का सूचक होता है। जिस स्त्री के दाहिने स्तन पर रक्त कमल की आभा वाला तिल का चिह्न होता है वह स्त्री चार कन्याओं और तीन पुत्रों की माता होती है ॥ १२६ क ॥

**तिलकं लाञ्छनं शोणं यस्या वामे कुचे भवेत्।**
**एकं पुत्रं प्रसूयादौ ततः सा विधवा भवेत् ॥ १२७ ॥**

यस्या वामे कुचे=स्तने शोणं=रक्तम् तिलकं लाञ्छनं=चिह्नं भवेत् सा आदौ एकं पुत्रं=सुतम् प्रसूय=उत्पाद्य ततो विधवा भवेत् ॥ १२७ ॥

जिस स्त्री के बायें स्तन पर लाल तिल अथवा लाल चिह्न हो वह पहला एक पुत्र पैदा करके विधवा हो जाती है ॥ १२७ ॥

**गुह्यस्य दक्षिणे भागे तिलकं यदि योषितः।**
**तदा क्षितिपतेः पत्नी सूते वा क्षितिपं सुतम् ॥ १२८ ॥**

यदि योषितः=स्त्रियाः, गुह्यस्य=भगस्य, दक्षिणे भागे तिलकं भवति तदा सा स्त्री क्षितिपतेः=पृथ्वीपतेः, पत्नी=महिषी भवति; क्षितिपं=पृथ्वीपतिं सुतं=पुत्रं च सूते=उत्पादयति ॥ १२८ ॥

जिस स्त्री के गुह्य स्थान (भग) के दाहिने भाग में तिल हो तो वह राजपत्नी होती है और राज्य करने वाले पुत्र को जन्म देती है ॥ १२८ ।

**नासाग्रे मशकः शोणो महिष्या एव जायते ॥ १२९ ॥**

महिष्याः=राजपत्न्या एव नासाग्रे=नासिकायाः अग्रे=अग्रभागे शोणः=रक्तवर्णः मशको जायते ॥ १२६ ॥

नाक के अग्रभाग में लाल मशशा राजा की पत्नी को ही होता है, ( अर्थात् नासाग्र में रक्त तिल वाली अवश्य राजपत्नी होती है ) ॥ १२६ ॥

**कृष्णः स एव भर्तृघ्न्याः पुंश्चल्याश्च प्रकीर्तितः ॥ १३० ॥**

स एव=नासाग्रे मशको यदि कृष्णः=श्यामवर्णो भवति, तर्हि भर्तृघ्न्याः=पतिघातिकायाः, पुंश्चल्याश्च=व्यभिचारे रतायाश्च प्रकीर्तितः=कथितः ॥

स्त्री के नाक के अग्रभाग में यदि काला मशशा हो तो वह पति को मारने वाली एवं व्यभिचार में लिप्त रहने वाली होती है ॥ १३० ॥

**नाभेरधस्तात् तिलकं मशको लाञ्छनं शुभम् ।**
**मशकस्तिलकं चिह्नं गुल्फदेशे दरिद्रकृत् ॥ १३१ ॥**

नाभे=उदरस्य मध्यभागतस्य, अधस्तात्=अधोभागे, तिलकं=तिलम् मशकः लाञ्छनम्=चिह्नम्, शुभम्=कल्याणप्रदं भवति । गुल्फदेशे=घुटिकादेशे, मशकः तिलकं चिह्नं दरिद्रकृत्=दारिद्र्यविधायकः ॥ १३१ ॥

स्त्रियों की नाभि के नीचे तिल और मशशा के चिह्न शुभ होते हैं। गुल्फ (एड़ी के ऊपर के जोड़ ) पर मशशा और तिल के चिह्न दरिद्रता प्रदान करने वाले होते हैं ॥ १३१ ॥

**करे कर्णे कपोले वा कण्ठे वामे भवेद्यदि ।**
**एषां त्रयाणामेकं तु प्राग् गर्भे पुत्रदं भवेत् ॥ १३२ ॥**

यस्या वामे=उत्तरभागस्थे, करे=हस्ते, कर्णे=क्रुतौ, कपोले=गण्डस्थले, वा=अथवा कण्ठे=गलप्रदेशे, तिलस्य मशकस्य लाञ्छनस्य चिह्नं यदि भवेत् एषां त्रयाणां तिलक-मशक-चिह्नानां मध्ये किमपि एकं चिह्नं भवेत् तर्हि तत् प्राग्गर्भे=प्रथमगर्भे पुत्रदं भवेत् । ( यस्या उक्तस्थाने उक्तचिह्नेषु मध्ये ) किमपि एकं चिह्नं भवति तर्हि सा प्रथमं तावत् पुत्रं जनयति ॥ १३२ ॥

जिस स्त्री के हाथ, कान, गाल अथवा गले के बायें भाग में तिल मशशा अथवा लाञ्छन ( चिह्न ) में से कोई एक चिह्न हो तो प्रथम गर्भ में वह पुत्र को उत्पन्न करती है ॥ १३२ ॥

**भालगेन त्रिशूलेन निर्मितेन स्वयम्भुवा ।**
**नितम्बिनीसहस्राणां स्वामित्वं योषिदाप्नुयात् ॥ १३३ ॥**

स्वयम्भुवा=ब्रह्मणा, निर्मितेन भालगेन=ललाटस्थेन, त्रिशूलेन=त्रिशूलाकारेण चिह्नेन युक्ता योषित्=स्त्री, नितम्बिनीसहस्राणाम्=सहस्रसंख्यापरिमितानां स्त्रीणाम्, स्वामित्वम्=प्रभुत्वम्, आप्नुयात्=प्राप्नुयात् ॥ १३३ ॥

ब्रह्मा ने जिस स्त्री के माथे पर त्रिशूल का चिह्न निर्मित किया हो वह स्त्री हजारों स्त्रियों की स्वामिनी होती है ॥ १३३ ॥

**सुप्ता परस्परं या तु दन्तान् किटिकिटायते ।**
**सुलक्षणाप्यशस्ता सा या किञ्चित् प्रलपेत् तथा ॥ १३४ ॥**

या स्त्री सुप्ता=शयनावस्थायां परस्परम् दन्तान्=द्विजान् किटिकिटायते=उपर्यधः स्थिताः दन्ताः परस्परं संघर्षेण शब्दं कुर्वन्ति, तथा सुप्तावस्थायामेव किञ्चित्=स्वल्पं प्रलपेत्=शब्दं करोति, एतादृशी स्त्री, सुलक्षणापि=शोभनलक्षणैर्युक्तापि अशस्ता=न प्रशंसिता ॥ १३४ ॥

जिस स्त्री के सोते हुए आपस में दाँत किटकिटाते हैं तथा जो सोते हुए बड़बड़ाती है वह श्रेष्ठ लक्षणों से युक्त होते हुये भी श्रेष्ठ नहीं कही जाती। ( अर्थात् अन्य शुभ लक्षणों वाली भी इन लक्षणों के कारण अशुभ ही होती है ) ॥ १३४ ॥

**पाणौ प्रदक्षिणावर्तो धन्यो वामो न शोभनः ।**
**नाभौ श्रुतावुरसि वा दक्षिणावर्त ईडितः ॥ १३५ ॥**

यस्याः पाणौ=हस्ते, प्रदक्षिणावर्तः=प्रदक्षिणवर्तुलः ( रोमविन्यासः ), धन्यः=प्रशस्तः=शुभः । वामावर्तः=वामवर्तुलः, न शोभनः=न श्रेष्ठः ( न शुभः ) । नाभौ=नाभिप्रदेशे, श्रुतौ=कर्णे, उरसि=हृदये वा दक्षिणावर्तः=दक्षिणभ्रमराकृतिः, ईडितः=पूजितः ( प्रशस्तः ) ॥ १३६ ॥

जिसके हाथ में आवर्त (चक्र ) दक्षिण ( दाहिनी ओर ) को घूमा हुआ हो वह हाथ श्रेष्ठ होता है। वामावर्त ( बाईं ओर को घूमा हुआ ) अशुभ होता है। नाभि, कर्ण एवं हृदय में दक्षिणावर्त शुभ होता है ॥ १३५ ॥

**सुखाय दक्षिणावर्तः पृष्ठवंशस्य दक्षिणे ।**
**अन्तःपृष्ठं नाभिसमो बह्वायुः पुत्रवर्धनः ॥ १३६ ॥**

पृष्ठवंशस्य=पृष्ठे मध्यस्थितवंशाकारं यदस्थि तस्य दक्षिणे=दक्षिणभागे, दक्षिणावर्तः=दक्षिणवर्तुलः, रोमराजिः, सुखाय=सुखादिप्रदानाय भवति । यस्याः अन्तःपृष्ठं=पृष्ठस्य मध्यभागे, नाभिसम आवर्तः=भ्रमरः स बह्वायुः=चिरायुष्कारकः, पुत्रवर्धनः=पुत्राणां वृद्धिकारको भवति ॥ १३६ ॥

पीठ के मध्य में स्थित रीढ के दाहिनी ओर दक्षिणावर्त रोमों का चक्र सुख प्रदान करने वाला होता है, जिस स्त्री की पीठ के मध्य में नाभि के

समान वर्तुल ( गोल ) चक्र होता है वह बड़ी आयु वाली और बहुत पुत्रों वाली होती है ।। १३६ ।।

राजपत्न्याः प्रदृश्येत भगमौलौ प्रदक्षिणः ।
स चेच्छकटभङ्गः स्याद् बहुपुत्रसुखप्रदः ।। १३७ ।।

यस्याः राजपत्न्याः = राजमहिष्याः, भगमौलौ = योनेः मौलौ = शिरोभगे, प्रदक्षिणः-दक्षिणावर्तचक्रः, प्रदृश्येत-दृश्येत, न तु अन्यत्र, सः-भगमौलौ दक्षिणावर्तः, चेत् शकटभङ्गः-शकटाकारेण भङ्गः स्यात् तर्हि बहुपुत्रसुखप्रदः-बहूनां पुत्राणां सुखं ददाति ।। १३७ ।।

जिस राजपत्नी के भग के ऊपर दक्षिण की ओर घूमा हुआ आवर्त (भ्रमर) हो और वहीं शकटाकार चिह्न द्वारा भंग भी हो तो भी उसके सुख देने वाले बहुत से पुत्र होते हैं ।। १३७ ।।

कटिगो गुह्यगो वर्तः पत्यपत्यनिपातनः ।
स्यातामुदरवेधेन पृष्ठावर्तौ न शोभनौ ।। १३८ ।।

कटिगः-कट्यां स्थितः, गुह्यगः = गुह्यस्थाने ( योनौ ) स्थितः, वर्तः = आवर्तः, पत्यपत्यनिपातनः = पतिः = भार्ता तस्य अपत्यानाम्-पुत्राणां च निपातनः = विनाशकर्ता । उदरवेधेन-उदरस्थितवर्तुलाकारचक्रेण, पृष्ठावर्तौ = पृष्ठभागस्थितचक्रौ स्याताम्-भवेताम्, तर्हि न शोभनौ-न शुभकारकौ ।। १३८ ।।

जिसके कटि ( कमर ) एवं गुह्य ( योनि ) में चक्राकार रोमों का आवर्त हो तो वह पति और पुत्रों का विनाश करने वाली होती है । पेट और पीठ में दोनों स्थानों पर चक्राकार आवर्त हों तो वे शुभ नहीं होते ।। १३८ ।।

एकेन हन्ति भर्तारं भवेदन्येन पुंश्चली ।
कण्ठगो दक्षिणावर्तो दुःखवैधव्यहेतुकः ।। १३९ ।।

एकेन-एकचक्राकारेण, भर्तारं-पतिम् हन्ति-विनाशयति, अन्येन-अपरेण-द्वित्रिचक्रयुतेन, पुंश्चली = व्यभिचारिणी भवेत् । कण्ठगः = कण्ठ-स्थानस्थितः, दक्षिणावर्तः चक्राकृतिः, दुःखवैधव्यहेतुकः-दुःखस्य = कष्टस्य वैधव्यस्य-विधवाभावस्य च हेतुकः-कारणं भवति ।। १३९ ।।

स्त्रियों का एकचक्राकार आवर्त उनके पति को मारता है, दो या उससे अधिक चक्र उन्हें व्यभिचारिणी बनाता है, गले में दक्षिणावर्त चक्र उनके दुःख और वैधव्य का सूचक होता है ।। १३९ ।।

**सीमन्तेऽथ ललाटे वा त्याज्या दूरेण यत्नतः ।**
**सा पतिं हन्ति वर्षेण यस्याः मध्ये कृकाटिका ॥ १४० ॥**

यस्याः सीमन्ते=सिन्दूरदानस्थाने, अथ=अथवा ललाटे=मस्तके, आवर्ते चक्रे सति सा यत्नतः=प्रयत्नतः, दूरेण=दूरादेव, त्याज्या=न ग्राह्या इत्यर्थः। यस्याः कृकाटिका=घाटा (मध्ये चक्रं) भवेत् सा स्त्री वर्षेण=परिणयानन्तरं वर्षमध्ये एव पतिं=भर्तारं हन्ति=विनाशयति ॥ १४० ॥

जिस स्त्री के सीमन्तप्रदेश, ललाट अथवा घाँटा में चक्र-चिन्ह हो उसे दूर से ही प्रयत्नपूर्वक त्याग देना चाहिये, क्योंकि ऐसे लक्षण वाली स्त्री का पति वर्ष भर में मर जाता है ॥ १४० ॥

**प्रदक्षिणो वा वामो वा रोम्णामावर्तकः स्त्रियाः ।**
**एको वा मूर्ध्नि द्वौ वा वामे वामगती अपि ।**
**आदशाहं पतिघ्नौ तौ त्याज्यौ दूरात् सुबुद्धिना ॥ १४१ ॥**

प्रदक्षिणः वामो वा स्त्रियाम् रोम्णाम्=आवर्तकः=रोमराजियुक्तः आवर्तकः=वर्तुलाकारः, मूर्ध्नि=शिरोभागे एकौ द्वौ वा (भवेताम्) वामे=वामभागे वामगती आदशाहं=परिणयदिवसादारभ्य दशदिवसपर्यन्तम्, उभावपि चिह्नौ, पतिघ्नौ=पतिविनाशकौ। अतः सुबुद्धिना=बुद्धियुक्तेन पुरुषेण, दूरात्=दूरत एव, त्याज्यौ=अग्राह्यौ। एतादृग्चिह्नशीलां स्त्रियं सुबुद्धिः परिहरेत्, तया साकं विवाहं न कुर्यादिति भावः ॥ १४१ ॥

शिर में रोमों का आवर्त (भ्रमरी) दक्षिणावर्त हो या वामावर्त हो पर एक या दो हों तो ऐसी भ्रमरी अशुभ होती है। वामावर्त भ्रमरी विवाह से दस दिन के अन्दर पति को मार देने वाली होती है। अतः बुद्धिमान् पुरुष को चाहिए कि ऐसी स्त्री का दूर से ही त्यागकर दें ॥ १४१ ॥

**कट्यावर्ता तु कुलटा नाभ्यावर्ता पतिव्रता ॥ १४२ ॥**

कट्यावर्ता=कट्याम् आवर्तः (भ्रमरः) यस्याः सा कुलटा=व्यभिचारिणी भवति, नाभ्यावर्ता=नाभिप्रदेशे आवर्तयुक्ता स्त्री, पतिव्रता=साध्वी भवति ॥

जिस स्त्री के कटिप्रदेश (कमर) में आवर्त (भ्रमर) हो वह व्यभिचारिणी होती है। नाभि में आवर्त (भ्रमर) हो तो पतिव्रता होती है ॥ १४२ ॥

**पृष्ठावर्ता च भर्तृघ्नी कुलटा वाऽथ जायते ॥ १४३ ॥**

पृष्ठावर्ता=पृष्ठदेशे आवर्तयुक्ता=भ्रमरयुक्ता स्त्री, भर्तृघ्नी=पतिघ्नी, वा=अथवा कुलटा=व्यभिचारिणी जायते=भवति ॥ १४३ ॥

पीठ में आवर्त वाली स्त्री पति अथवा व्यभिचारिणी होती है ॥ १४३ ॥

## उपसंहारः

स्कन्द उवाच--

सुलक्षणापि दुःशीला[३] कुलक्षणशिरोमणिः ।
अलक्षणापि या साध्वी सर्वलक्षणभूस्तु सा ॥ १४४ ॥

स्कन्दः=स्वामिकार्तिकः शिवज्येष्ठपुत्रः, अगस्त्यं प्रति उवाच=उक्तवान्—हे अगस्त्य ! सुलक्षणापि=सुष्ठु शोभनलक्षणा=लक्षणयुक्तापि दुःशीला=दुष्टं निम्नस्तरीयं शीलं स्वभावो यस्याः सा व्यभिचारिणीस्वभावयुक्ता यदि, तर्हि सा कुलक्षणशिरोमणिः=कुलक्षणानां शिरोमणिः=उत्कृष्टा भवति। अलक्षणापि=शुभलक्षणरहितापि या स्त्री साध्वी=साध्वाचरणयुक्ता सा सर्वलक्षणभूः=एतादृशी साध्वी स्त्री समस्तशुभलक्षणस्थानं भवति ॥ १४४ ॥

शङ्करपुत्र स्वामिकार्तिक जी कहते हैं कि—हे अगस्त्य ! सुन्दर श्रेष्ठ लक्षणों से युक्त स्त्री यदि दुःशीला व्यभिचारादि स्वभाव वाली हो तो वह कुलक्षणा स्त्रियों की शिरोमणि होती है । श्रेष्ठ लक्षणों से रहित होती हुई भी जो स्त्री पतिव्रता होती है वह सम्पूर्ण शुभलक्षणों का उत्पत्तिस्थान होती है ।। १४४ ॥

सुलक्षणा सुचारित्रा स्वाधीना पतिदेवता ।
विश्वेशानुग्रहादेव गृहे योषिदवाप्यते ॥ १४५ ॥

सुलक्षणा=शोभनलक्षणयुक्ता, सुचारित्रा=श्रेष्ठपातिव्रतादिधर्मपालनरता, स्वाधीना=स्वपत्युः वशवर्तिनी, पतिदेवता=पतिः=भर्ता एव देवता यस्याः सा, विश्वेशानुग्रहादेव=विश्वेशस्य=विश्वनाथस्य, अनुग्रहादेव=कृपाया एव, गृहे योषित्=स्त्री, अवाप्यते=प्राप्यते ॥ १४५ ॥

सुन्दर लक्षणों से युक्त, श्रेष्ठ पतिव्रतादिधर्मों से युक्त, पति के अधीन रहने वाली, पति को देवता समझने वाली स्त्री विश्वेश्वर ( भगवान् विश्वनाथ ) की विशेष अनुकम्पा से ही घर में आती है । ( अर्थात् विशेष पुण्य के फलस्वरूप साध्वी स्त्री से पुरुष का परिणय होता है ) ॥ १४५ ॥

अलङ्कृताः स्ववासिन्यो याभिः प्राक्तनजन्मनि ।
नानाविधैरलंकारैस्ताः सुरूपा भवन्ति हि ॥ १४६ ॥

याभिः=स्त्रीभिः, प्राक्तनजन्मनि=पूर्वजन्मनि, स्ववासिन्यः=विवाहिताः स्त्रियः कुमारिकाश्च नानाविधैः=अनेकविधैः अलङ्कारैः=भूषणादिभिः अलंकृताः; ताः=नार्यः, अपरजन्मनि, सुरूपाः=शोभनरूपयुक्ताः, हि=निश्चयेन, भवन्ति ॥ १४६ ॥

जो स्त्रियां पूर्वजन्म में विवाहित स्त्रियों को, अविवाहिता कुमारिकाओं को नाना प्रकार के वस्त्रों और आभूषणों से अलङ्कृत करती हैं वे निश्चय ही दूसरे जन्म में अत्यन्त सुन्दर रूप को प्राप्त करती हैं ॥ १४६ ॥

**सुतीर्थेषु वपुर्याभिः क्षालितं वा विहायितम् ।**
**ता लावण्यतरङ्गिण्यो भवन्तीह सुलक्षणाः ॥ १४७ ॥**

याभिः=स्त्रीभिः सुतीर्थेषु=काशीप्रयागादिषु सुतीर्थेषु, वपुः=शरीरं क्षालितं=स्नानादिकं कृतम्, वा=अथवा विहायितम्=शरीरावसानं कृतम्, ताः स्त्रियः, इह=अस्मिन् जन्मनि सुलक्षणाः=समस्तशुभलक्षणयुक्ताः, लावण्यतरंगिण्यः=लावण्यस्य=सुन्दरतायाः, तरंगिण्यः=नद्यो भवन्ति ॥

जिन स्त्रियों द्वारा काशी प्रयागादि तीर्थों की गंगा आदि पुण्य नदियों में शरीर को प्रक्षालित किया जाता है अथवा शरीरत्याग किया है वे स्त्रियां दूसरे जन्म में लावण्य की नदियाँ ( अत्यधिक लावण्य से युक्त और समस्त शुभलक्षणों से युक्त ) होती हैं ॥ १४७ ॥

**अर्चिता जगतां माता याभिर्मृडवधूरिह ।**
**ता भवन्ति सुचारित्रा योषाः स्वाधीनभर्तृकाः ॥ १४८ ॥**

याभिः=स्त्रीभिः जगतां माता, मृडवधूः=मृडः शिवः तस्य वधूः=पत्नी पार्वती, इह=अस्मिन् संसारे, अर्चिता=पूजिता, ताः योषाः=स्त्रियः, सुचारित्राः=सुन्दरचरित्रयुक्ता, ( पतिव्रताः ), स्वाधीनभर्तृका=अधीनस्यपतिकाश्च भवन्ति ॥ १४८ ॥

जो स्त्रियां संसार की माता भूतभावन भगवान् शङ्कर की पत्नी पार्वती का पूजन करती हैं, वे स्त्रियां सुन्दर चरित्रवाली, पतिव्रता और अपने पति को वश में करने वाली होती हैं ॥ १४८ ॥

**स्वाधीनपतिकानां च सुशीलानां मृगीदृशाम् ।**
**स्वर्गापवर्गावत्रैव सुलक्षणफलं हि तत् ॥ १४९ ॥**

स्वाधीनपतिकानाम्=स्वाधीनः=वशं गतः पतिः यासां तासाम्, सुशीलानाम्=सुन्दरशीलयुक्तानाम् ( पातिव्रतादियुक्तानां ) मृगीदृशाम्=मृगी=हरिणीव यस्याः दृशाविव दृशौ यासां तासाम्, स्वर्गापवर्गौ=स्वर्गः=देवलोकः, अपवर्गः=मोक्षस्थानम् उभावपि तस्याः कृते, अत्रैव=अस्मिन् संसारे एव, सुलक्षणफलम्=सुलक्षणस्य पतिव्रतादिसुलक्षणस्य फलम्, न तु अन्यत् फलम् ॥ १४९ ॥

जिन स्त्रियों के पति वशवर्ती हैं जो स्वयं श्रेष्ठ सुलक्षण ( पातिव्रतादि सुन्दर लक्षणों से युक्त ) हैं ऐसी मृग के समान नेत्रों वाली स्त्रियों के लिए यहीं स्वर्ग और मोक्ष है। वही सुलक्षणों का निश्चित फल है ॥ १४९ ॥

**सुलक्षणैः सुचरितैरपि मन्दायुषं पतिम् ।**
**दीर्घायुषं प्रकुर्वन्ति प्रमदाः प्रमदास्पदम् ॥ १५० ॥**

प्रमदा=नार्यः पतिव्रताः, सुलक्षणैः=शुभलक्षणयुक्तैः, सुचरितैः=सुशोभनचरितैः=पतिव्रतादिचरितैः, मन्दायुषम्=अल्पायुषं पतिम्=स्वामिनं प्रमदास्पदम्=हर्षादिवर्धनकरं दीर्घायुषम्=दीर्घकालजीविनं प्रकुर्वन्ति ॥

स्त्रियां श्रेष्ठ लक्षणों द्वारा सुन्दर चरित्र ( पतिव्रत ) द्वारा अल्प आयु वाले पति को हर्षादि देने वाली दीर्घायु प्रदान करती हैं। ( अर्थात् उसके पतिव्रत धर्म के प्रभाव से पति दीर्घायु प्राप्त करता है ) ॥ १५० ॥

**अतः सुलक्षणा योषाः परिणेया विचक्षणैः ।**
**लक्षणानि परीक्ष्यादौ हित्वा दुर्लक्षणान्यपि ॥ १५१ ॥**

अतः=अतएव, विचक्षणैः बिद्वद्वर्यैः, आदौ=प्रथमतः, लक्षणानि=शुभाशुभालक्षणानि, परीक्ष्य=परीक्षां विधाय, सुलक्षणाः=सुन्दरलक्षणयुक्ताः योषाः, परिणेयाः=विवाह्याः। दुर्लक्षणानि=कुत्सितलक्षणानि हित्वा=परित्यज्य ( सुलक्षणाः परिणेयाः ) ॥ १५१ ॥

उक्त गुणदोषों पर पूर्ण विचार करके बुद्धिमान् पुरुष को चाहिए कि दुर्लक्षणों वाली स्त्री को त्यागकर सुलक्षणों से युक्त स्त्री के साथ विवाह करे ॥ १५१ ॥

**लक्षणानि मयोक्तानि सुखाय गृहमेधिनाम् ॥ १५२ ॥**

( घटोद्भव ! =अगस्त्य ! ) गृहमेधिनाम्=गृहस्थानाम्, सुखाय=सुखशान्तये, मया=स्कन्देन, (एतानि) लक्षणानि=शुभाशुभलक्षणानि, उक्तानि=कथितानि ॥ १५२ ॥

हे अगस्त्य ! मैंने ये स्त्रियों के शुभाशुभ लक्षण गृहस्थों के सुख के लिये कहे हैं ॥

॥ इति स्त्रीलक्षणम् ॥

## राजयोगसङ्केतिसूचकरेखायुतं

# हस्तचित्रम्



**पुरुष हस्तरेखा**

श्लोक सं०-४—हाथी १, छाता २४ (८), मछली २ (६), तालाब ३८ (३६) वीणा ३७ (३९),
अंकुश १० (१३)।

,, ५—शीशा ३६ (१५), माला ६ (२५), कमण्डलु १८, खड्ग २८, पर्वत २३, हल ५४ (१३)।

,, ६—चक्र ३२ (४५), धनुष २५ (४१)· कमल ३० (३), पंखा ४२, आसन १९ (१४)।

,, ७—घड़ा १३ (३३), वृक्ष २९ (१०), घोड़ा ४, गदा २७ (२७), मृदंग १५ (१८)।

,, ११—गज १, अश्व ४, रथ २१ (१)।

,, २५—शंख ४० (२), कमल ३० (३), यव ३९ (४), माला ६ (२५), मछली २ (६),
ध्वजा २९ (७)।

[ विशेष द्रष्टव्य : इसी ग्रन्थ के पृ० ४-५-६, ११ ]

सामुद्रिकशास्त्रदृष्टया

## प्रशस्तरेखायुतपादचित्रम्



पुरुष रेखा ( पद-तल )

श्लोक-४—छाता ८ (२४), मछली ६ (२), तालाब ३६ (२२). वीणा ३९ (३७), अंकुश १३ (१०) ।

५—शीशा १५ (३६), माला २५ (६), हल १२ (५४) ।

६—चक्र ४५ (३२), धनुप ४१ (२५), कमल ३ (३०), आसन १४ (१९) ।

७—खम्बा ४२, घड़ा ३३ (१३), वृक्ष १० (२९), गदा २७ (२७), मृदंग १८ (१५) ।

११—रथ १ (२१) ।

२५—शंख २ (४०) कमल ३ (३०), यव ४ (३९), माला २५ (६), मछली ६ (२), ध्वजा ७ (२९) ।

[ विशेष द्रष्टव्य : पृ० ४–५–६, ११ ]

वनितायाः शुभलक्षणयुतं

# हस्तचित्रम्

(नारीणां हस्तरेखा अपि पुरुषाणां हस्तवदेव द्रष्टव्याः)



बनितांग रेखा ( हाथ )

श्लोक संख्या —

७४—मछली २ (६)
स्वस्तिक १७ (९)
कमल ३० (१६)

७५—शंख ४० (१२)
छत्र २४ (८)
कच्छप ३३

७६—हाथी १
घोड़ा ४
वृषभ ३५

७७—महल ४४
वज्र ५१
उमा ११

७८—चामर ३२ (२०)
अंकुश १० (१३)
धनुष २९ (४१)

७९—त्रिशूल ७
खड्ग २८
गदा २७ (२७)
शक्ति ४३
दुन्दुभि (४०)

[ विशेष द्रष्टव्य : पृ० १०२-४ ]

राजयोगसङ्केतिक-

## हस्तरेखाचित्र



[ विशेष द्रष्टव्य : पृ० १, श्लोक संख्या २ एवं ३ ]

शिवपुराणान्तर्गतगणेशविवाहप्रसंगे

# कन्यालक्षणानि

**तस्मात् परीक्ष्य मतिमान् कन्यां लक्षणसंयुताम् ।**
**विवाहेत यथा न स्यात् सर्वथाऽनर्थभाजनम् ॥ १ ॥**

शिवपुराणस्य एकोनचत्वारिंशेऽध्याये शिवपुत्रस्य गणेशस्य विवाहस्य प्रस्तावे कन्यायाः लक्षणानि कथितानि । तानि यथा—

यथा=येन प्रकारेण सर्वथा=सर्वप्रकारेण, पुरुषः अनर्थभाजनम्=अनर्थस्य पात्रं न स्यात्, तस्मात्-एतत् कारणात् मतिमान्-बुद्धिमान् पुरुषः, लक्षणसंयुताम्-शुभाशुभलक्षणयुक्ताम्, कन्यां परीक्ष्य=परीक्षां विधाय, विवाहेत-उद्वाहयेत्, तया साकं परिणयं कुर्यात् ॥ १ ॥

शिवपुराण के ३९वें अध्याय में गणेश के विवाह-प्रस्ताव के समय कन्या के ये लक्षण कहे गये हैं, ताकि वर किसी प्रकार के अनर्थों में न पड़े । इसलिए बुद्धिमान् पुरुष को चाहिए कि वह शुभ लक्षणों से युक्त कन्या से विवाह करे ॥ १ ॥

कन्यायाश्चतुर्दश दोषाः

**तथा च सम्प्रवक्ष्यामि कन्यादोषानशेषतः ।**
**यान् विज्ञाय सुधीः क्वापि न मज्जेद् दुःखसागरे ॥ २ ॥**

तथा च=तेन च प्रकारेण, अशेषतः-पूर्णतः, कन्यादोषान्-कन्याया दोषान्, सम्प्रवक्ष्यामि=साधुतया कथयिष्यामि । यान्=दोषान् विज्ञाय=ज्ञात्वा सुधीः=शोभना धीः=बुद्धिः यस्य सुधीः, क्वापि=कुत्रापि, दुःखसागरे=दुःखस्य सागरे=समुद्रे, न मज्जेत्=न निमज्जेत् ॥ २ ॥

आचार्य कहते हैं—कौन कन्या विवाह के योग्य या अयोग्य है—यह जानने के लिए कन्या के सम्पूर्ण दोषों को कहूँगा, जिनको जानकर बुद्धिमान् पुरुष दुःख के सागर में कभी न डूबे ॥ २ ॥

**कपिला केकराक्षी च हीनाङ्गी रोगिणी खला ।**
**अलोमा चातिलोम्नी चाधिकाङ्गी पिङ्गला तथा ॥ ३ ॥**
**वक्रनासा कृशा दीर्घा स्थपुटा स्खलद्गतिस्तथा ।**
**एताः कन्याः परित्याज्या विवाहे तु कृतात्मभिः ॥ ४ ॥**

कपिला=धूम्रवर्णा, केकराक्षी=बलिराक्षी, हीनाङ्गी=न्यूनाङ्गी, रोगिणी=रोगयुक्ता, खला=स्वभावेन दुष्टा, अलोमा=रोमरहिता, अतिलोम्नी=अत्यधिकरोमयुक्ता, अधिकाङ्गी=अधिकाङ्गयुक्ता, पिङ्गला=पिङ्गलवर्णा ॥३॥

वक्रनासा=कुटिलनासा, कृशा=दुर्बला, दीर्घा=लम्बायमाना, स्थपुटा=पीवरनासिकाछिद्रा, स्खलद्गतिः=स्खलन्ती गतिः यस्या सा, कृतात्मभिः=विकारज्ञैरेताः कन्या विवाहे परित्याज्याः=परिणये सर्वथा त्याज्याः ॥ ४ ॥

भूरे रंगवाली, ऐंच कर देखने वाली, कम अंगों वाली, रोगिणी, दुष्ट स्वभाववाली, रोमरहित, अत्यधिक रोमों से युक्त, अधिक अंगों वाली, पिंगल=पीले रंगवाली ॥ ३ ॥

टेढ़ी नाक, दुबली, लम्बी, विषम नासापुटों वाली, चलने में गिर पड़ने वाली-ऐसी कन्याओं का विचारज्ञ पुरुष विवाह में सर्वथा त्याग करें ॥ ४ ॥

**इमे कन्यागता दोषाश्चतुर्दश प्रकीर्तिताः ।**
**बाह्यास्त्वाभ्यंन्तरा दोषा दुर्ज्ञाना अकृतात्मभिः ॥ ५ ॥**

इमे चतुर्दशसंख्याकाः कन्यागताः=कन्यायां स्थिताः चतुर्दश बाह्याः दोषाः, प्रकीर्तिताः=कथिताः । आभ्यन्तरा दोषाः=दुःशीलादिस्वभावजन्याः । आभ्यन्तरदोषास्तु अकृतात्मभिः=ईश्वरस्य साक्षात्काररहितैः अज्ञैः, दुर्ज्ञानाः=दुर्बोधाः भवन्ति ॥ ५ ॥

ये ही चौदह संख्या वाले कन्या में रहने वाले दोष बाह्य कहे गये हैं । दुःशील आदि स्वभावजन्य आभ्यन्तर दोष ईश्वर-साक्षात्कार जिसने नहीं किया है ऐसे अज्ञ पुरुष द्वारा जानना बहुत कठिन है ॥ ५ ॥

दोषज्ञानोपायाः

**तस्माद् वेदोक्तमाहृत्य दोषज्ञानं भवेदिह ।**
**अष्टौ पिण्डान् विधायादौ शुद्धमृत्सम्भवानिह ॥ ६ ॥**
**ताभिस्तस्याः परीक्ष्येत लक्षणं हृद्गतं च यत् ।**

तस्मात्=अकृतात्मभिः, दुर्ज्ञेयाः, अतः वेदोक्तं=ऋगादि वेदेषूक्तं उपायम् आहृत्य दोषज्ञानं भवेत् । यथा आदौ शुद्धमृत्संभवान्=शुद्धमृत्तिकया निर्मितान् अष्टौ पिण्डान् विधाय ॥ ६ ॥

ताभिः=मृत्पिण्डैः तस्याः=कन्यायाः हृद्गतं=हृदयस्थितं भावम्, शुभाशुभलक्षणं परीक्ष्येत ।

ईश्वर कृपारहित पुरुषों द्वारा दुर्बोध होने के कारण ऋगादि वेदों द्वारा प्रतिपाद्य उपायों का आदर करते हुए ही दोषज्ञान होता है, जैसे—प्रथमतः शुद्धमृत्तिका से आठ पिंडों को बनाकर ॥ ६ ॥

उन आठ मृत्पिण्डों से कन्या के हृद्गत दुःशीलादि शुभाशुभ भावों के लक्षणों की परीक्षा करें।

**क्षेत्राद् गोष्ठाद् वेदितः सिन्धुतश्च,**
**द्यूतस्थानादैरिणाच्चापि सम्यक्।**
**चतुष्पदात् पितृवनात् तथैव**
**ग्राह्याः मृदः शुद्धिमभीप्समानैः ॥ ७ ॥**

क्षेत्रात्=कृषिक्षेत्रात्, गोष्ठात्=गावो यत्र निवसन्ति, गोशालातः, वेदितः=यज्ञादिहवनीयवेदिकातः, सिन्धुतः=समुद्रतः, द्यूतस्थानात्=द्यूतक्रीडास्थानात्, ऐरिणात्=सैन्धवलवणोत्पत्तिस्थानात्, चतुष्पदात्=चतुष्पथात्, पितृवनात्=श्मशानात्, शुद्धिमभीप्समानैः=कन्यायाः शुद्धिं कामयमानैः, ( पुरुषैः ) उक्त-स्थानात् मृदः ग्राह्याः ॥ ७ ॥

कन्या के शुद्ध्यशुद्धि गुणदोष जानने की इच्छा रखने वाला पुरुष १. खेत की मिट्टी, २. गोशाला की मिट्टी, ३. वेदी की मिट्टी, ४. समुद्र की मिट्टी ५. जुआ खेलने वाले स्थान की मिट्टी, ६. सैन्धव ( सेंधा नमक ) नमक के उत्पन्न होने वाले स्थान की मिट्टी, ७. चौराहे की मिट्टी, और ८. श्मशान की मिट्टी से, अर्थात् उक्त आठ स्थानों से पृथक् पृथक् मिट्टी लावे ॥ ७ ॥

**इत्थमानीय मृत्कूटानसंकीर्णान् पृथक्-पृथक्।**
**वेदमन्त्रेण सम्मन्त्र्य पिण्डितान् तां गुरुर्वदेत् ॥ ८ ॥**

इत्थम्=अनेन प्रकारेण, मृत्कूटान्=मृत्तिकापिण्डात् असंकीर्णान् पृथक् पृथक् आनीय पिण्डितान्=एकी कृत्य, वेदमन्त्रेण सम्मन्त्र्य=अभिमन्त्र्य, गुरुः=आचार्यः, कन्यां प्रति वदेत् ॥ ८ ॥

इस प्रकार से आठ स्थानों की अलग-अलग मिट्टियों के पिण्ड बनाकर वेद-मन्त्रों से समस्त पिण्डों को अभिमन्त्रित कर गुरु ( आचार्य ) कन्या से इस प्रकार कहे ॥ ८ ॥

**एतन्मध्ये त्वया ग्राह्यं पिण्डमेकं सुलक्षणे।**
**पिण्डे गृहीते मतिमान् फलं ब्रूयात् सुनिश्चितम् ॥ ९ ॥**

हे सुलक्षणे ! =शुभलक्षणसंयुते ! त्वया = भवत्या, एतन्मध्ये=अष्टपिण्ड-मध्ये, एकं पिण्डं= मृत्पिण्डं ग्राह्यम्=ग्रहीतव्यम्। तथा पिण्डे गृहीते सति स मतिमान्=बुद्धिमान् गुरुः, सुनिश्चितम् फलं=शुभाशुभं फलं ब्रूयात् ॥ ९ ॥

"हे सुलक्षणे ! तुम इन आठ पिण्डों में से एक मिट्टी का पिण्ड उठा लो"। उसके उठा लेने पर उठाये गये मृत्पिण्ड के अनुसार बुद्धिमान् गुरु ( आचार्य ) कन्या के शुभाशुभ लक्षणों को कहे ॥ ९ ॥

**क्षेत्रपिण्डेन संयुक्ता पतिपुत्रसुखान्विता।**
**गोष्ठपिण्डे पतिमती, रूपिणी वेदिपिण्डतः ॥ १० ॥**

सा कन्या क्षेत्रपिण्डेन=कृषिमृत्तिकापिण्डेन संयुक्ता=कन्या चेत् तदा पति-पुत्रसुखान्विता भविष्यति। गोष्ठपिण्डेन=गोशालापिण्डेन, पतिमती=स्वामिवल्लभा (पतिप्रिया ) भवति। वेदिपिण्डतः=वेदिकामृत्पिण्डतः, रूपिणी=रूपयुक्ता भवति ॥ १० ॥

यदि कन्या खेत की मिट्टी वाला पिण्ड उठाये तो पति-पुत्र और समस्त सुखों से युक्त होती है। गोशाला वाले पिण्ड को उठाये तो पति की प्यारी होती है। वेदिका की मिट्टी वाले पिण्ड को उठावे तो अत्यन्त सुन्दर होती है ॥ १० ॥

**नदीपिण्डे समृद्धा स्यात् द्यूतपिण्डे शठा भवेत्।**
**प्रव्राट् चतुस्सृती पिण्डादैरिणाद्धनवर्जिता ॥ ११ ॥**

नदीपिण्डे=नद्याः मृत्पिण्डे गृहीते सति समृद्धा=समृद्धियुक्ता स्यात्, द्यूतपिण्डे=द्यूतस्थलस्य मृत्तिकापिण्डे गृहीते सति शठा=निकृता भवेत्। चतुस्सृतीपिण्डात्=चतुष्पथमृत्तिकापिण्डग्रहणात्, प्रव्राट्=संन्यासिनी वैराग्य-युक्ता ) भवति। ऐरिणात्=सैन्धवलवणस्थलाद् गृहीतपिण्डात्, धनवर्जिता=धन रहिता भवति ॥ ११ ॥

नदी की मिट्टी वाला पिण्ड ग्रहण करने पर समृद्धि से युक्त होती है। द्यूतस्थल की मिट्टी का पिण्ड ग्रहण करने वाली, शठता ( धूर्तता ) करने वाली, तथा चतुष्पथ ( चौराहे ) की मिट्टी के पिण्ड को उठाने वाली संन्यासिनी ( विरागयुक्ता ) होती है। सैन्धवनमक के उद्भव स्थान की मिट्टी उठाने वाली निर्धन होती है ॥ ११ ॥

**श्मशानपिण्डे सुक्रूरा पतिघ्नी स्यान्न संशयः।**
**आन्तरं लक्षणं वीक्ष्य कुर्याद् भार्यां मनोरमाम् ॥ १२ ॥**

श्मशानपिण्डे=श्मशानस्थलस्य मृत्तिकापिण्डे गृहीते सति सुक्रूरा-अत्यन्तक्रूरा पतिघ्नी=स्वामिहन्त्री स्यात्, अत्र न संशयः। अनेन प्रकारेण आन्तरं=आभ्यन्तरं लक्षणं वीक्ष्य=अवलोक्य (ज्ञात्वा) मनोरमाम्=अन्तर्ह्लादिनीम् भार्यां=पत्नीं कुर्यात् ॥ १२ ॥

यदि वह कन्या श्मशान की मिट्टी के पिण्ड को उठावे तो अत्यन्त क्रूर एवं पति को मारने वाली होती है-इसमें संशय नहीं है। इस प्रकार आभ्यन्तर गुणागुण लक्षणों को देखकर समझकर मनोरम कन्या को भार्या बनावे ॥ १२ ॥

## दश पितृदोषाः

**इमे कन्यागता दोषा मया तेऽद्य प्रकीर्तिताः।**
**पितृसम्बन्धतो दोषान् शृणु त्वं वरवर्णिनि ! ॥ १३ ॥**

इमे=उपरिकथिताः कन्यागताः=कन्यायां भवाः अष्टौ गुणदोषाः मया तेऽद्य प्रकीर्तिताः। सम्प्रति पितृसम्बन्धतः=पितुः सम्बन्धात् आगतान् दोषान् हे वरवर्णिनि ! त्वं शृणु ॥ १३ ॥

ऊपर कथित ये आठ गुण और दोष अभ्यन्तर कहे जाते हैं। इनको देखकर ही कन्या के साथ विवाह करना चाहिए।

अब तुम पिता से सम्बद्ध दोषों को सुनो ॥ १३ ॥

**हीनकर्माऽथ निश्छन्दो लोमशोऽर्शस आमयी।**
**क्षयी निष्पौरुषः श्वित्रिकुष्ठ्यपस्मारिणस्तथा ॥ १४ ॥**
**दशेमान् पितृदोषांश्च परीक्ष्य विधिवद् बुधः।**
**कन्यां सुलक्षणवतीं विवाहेत मुदान्वितः ॥ १५ ॥**

हीनकर्मा=निम्नकर्मकर्ता, जात्या निम्नोऽपि, निश्छन्दः=वेदरहितः, वैदिकविधानरहितः, लोमशः-अधिकरोमयुक्तः, अर्शसः अर्शोरोगस्य, आमयी=आमरोगयुक्तः, क्षयी=क्षयरोगयुक्तः, निष्पौरुषः=उद्यमरहितः श्वित्री-श्वेतकुष्ठयुक्तः, कुष्ठी=गलितकुष्ठयुक्तः, अपस्मारी-मूर्छारोगवान् स्मरणशक्तिरहितश्च (एते दश पितृसम्बद्धाः दोषाः सन्ति) ॥ १४ ॥

इमान्-उपर्युक्तान्, दश-दशसंख्याकान्; पितृदोषान्=पितुः दोषान्, विधिवत्-साधुतया, बुधः=पण्डितः (विज्ञः), परीक्ष्य=परीक्षणं विधाय, सुलक्षणवतीं-शोभनलक्षणयुक्ताम्, मुदान्वितः-हर्षान्वितः, विवाहेत-विवाहं कुर्यात् ॥

१. हीन कर्मकर्ता या जाति से हीन, २. वेदरहित अथवा वेदविधि से कर्म-रहित, ३. अधिक रोमों से युक्त, ४. अर्शरोगी, ५. आमरोगी, ६. क्षयरोग से युक्त, ७. उद्यमरहित, ८. श्वेतकुष्ठी, ९. गलितकुष्ठी, और १०. अपस्मार (मृगी) रोग से युक्त ।। १४ ।।

ऊपर के श्लोक द्वारा प्रतिपादित पिता के दश दोषों को विधिवत् परीक्षण करके बुद्धिमान् पुरुष सुन्दर लक्षण वाली कन्या से प्रसन्नतापूर्वक विवाह करे ।। १५ ।।

: ४ :

आचार्यकेशवदैवज्ञविरचितं

# स्त्रीपुंसयोर्लक्षणप्रकरणम्

( मुहूर्ततत्त्वग्रन्थान्तर्गतम )

[ तदात्मजगणेशदैवज्ञकृतटीकासंवलितम् ]

# स्त्रीपुंसयोर्लक्षणप्रकरणम्

## १. वधू (स्त्री) लक्षणानि

पादौ श्लिष्टांगुली चास्रनखकजतलावुन्नतौ गूढगुल्फौ;
जंघे वृत्ते विरोमे करिकरसदृशे निःकचोरू सुजानू।
श्रोण्यौच्चं सच्च गूढो मणिरपि विपुलाश्वत्थपत्राभगुह्यम्,
नाभिः सव्या गभीरारुणनिभरसनोच्चो नितम्बोऽङ्गनानाम् ॥१॥

अथ "सद्वधूं लक्षणाढ्यां परिणयेत्" इत्युक्तम्, अतस्तानि स्त्रीलक्षणान्याह-
पादाविति। श्लिष्टाः=विरला अङ्गुलयो ययोस्तौ श्लिष्टांगुली। अस्राणि=
रक्तानि, नखानि ययोस्तौ अस्रनखौ। के=जले जातं कजम्=कमलम्, तद्वत्
तले ययोस्तौ कजतलौ तौ च तौ तथोक्तौ। उन्नतौ=उच्चौ, कूर्मपृष्ठसदृश-
पृष्ठौ गूढौ गुल्फौ ययोस्तौ तथोक्तौ। एवंविधौ पादौ शुभौ।

वृत्ते=वर्तुले, विरोमे=रोमरहिते। अनन्तत्वात् स्त्रियां टाप्। करिणः=
गजस्य, करः=शुण्डादण्डस्तेन सदृशे। एवंविधे जंघे शुभे। कचानाम्=केशा-
नामभावो ययोस्ते निःकचे, ते च ते ऊरू च निःकचोरू शुभे। सुष्ठु च ते
जानू च सुजानू। सु शब्देन समेऽनुल्वणे सन्धी च गृह्यते।

श्रोण्योः औच्चम्=कूर्मपृष्ठमिव अनुन्नतम् सत् शुभं स्यात्। चः समु-
च्चये। सदिति यथालिङ्गं यथावचनं सर्वत्र सम्बध्यते। गूढो मणिरपि
शुभः। मणिर्भगान्तरजः। "मणिर्लिङ्गाग्रजो भागो मणिः प्रोक्तो भगध्वजः"
इति देवदत्तः। अपिः समुच्चये। विपुलम्=विस्तीर्णम्। अश्वत्थपत्राभम्=
पिप्पलपत्रसदृशं गुह्यं शुभम्। गुह्यम्=योनिः। सव्या=सव्यावर्त्ता, गभीरा=
निम्ना नाभिः शुभा। अरुणनिभा=रक्तवर्णा, रसना=जिह्वा, शुभा। उच्चः=
मांसोपचितो नितम्बः शुभः। अङ्गनानाम्=स्त्रीणाम् ॥१॥

शास्त्र का आदेश है कि 'सुलक्षणा वधू से ही विवाह-सम्बन्ध करना चाहिये',
अतः आचार्य स्त्री-लक्षणों का व्याख्यान कर रहे हैं। वे कहते हैं—स्त्रियों के ऐसे
पैर हों जिनकी अंगुलियाँ परस्पर मिली हों, नख लालिमायुक्त हों, जिनके तलवे कमल
की तरह अरुण हों, जिनका ऊपरी भाग कछुए की पीठ की तरह उठा हुआ हो,
जिनके टखनों की हड्डी न दिखायी देती हो, जाँघें हाथी की शूँड़ की तरह गोल एवं
रोमरहित हों, जिसकी जानुओं (पिण्डलियों) पर बाल न हों और वे समान हों
ऊँची नीची न हों, जिसका श्रोणि (कटि) प्रदेश कछुए की पीठ की तरह उठा हुआ

और देखने में सुन्दर हो, जिसकी मणि (भगमुख) गम्भीर हो, योनि पीपल के पत्ते के आकार एवं आभा वाली हो, जिसकी नाभि दक्षिण की ओर घूमी हुई, गम्भीर तथा अरुणवर्ण वाली हो, तथा ऊँचे और गोल नितम्ब हों—ऐसी स्त्रियाँ पति के लिये शुभ (कल्याणकारिणी) होती हैं ॥ १ ॥

किञ्च—

**त्रैवल्याढ्यश्च मध्योऽकचकठिनकुचौ कम्बुवद् ग्रीवकोरो**
**मृद्विष्टं पक्वबिम्बाधर इह, सुसमाः कुन्दकोशाभदन्ताः।**
**सूक्तिर्नीला सुदृग् भ्रूयुगमणुशशिभं शस्तनासा सुकर्णा,**
**नीला कुञ्चैककूपालकसुसमशिरोऽर्धेन्दुभालं समं च ॥ २ ॥**

त्रैवल्याढ्य इति। तिस्रो वलयः=त्रैवल्यम्, तेनाढ्यश्चासौ मध्यश्च। मध्यः=मध्यप्रदेशः, स शुभः। अथ च—अकचौ=केशरहितौ, कठिनौ च तौ कुचौ=अकचस्तनौ। कम्बुः=शङ्खः, तद्वद् ग्रीवा शुभा। उरः=उरस्स्थलम्, मृदु इष्टम्=शुभमिष्टमिति अत्र श्लोके यथालिङ्गं यथावचनं च सर्वत्र सम्बध्यते। बिम्बम्=बिम्बीफलम्। "अवयवे च" इत्यादिना अण्, तल्लोपश्च। पक्वं च तद् बिम्बं च तद्वदधरः=अधरोष्ठः शुभः। सु=सुष्ठु, समाः=सदृशाः स्निग्धाः। कुन्दस्य कोशः कुड्मलः, तद्वदाभान्ति ते तथा। एवंविधा दन्ताः शुभाः।

सुष्ठु चासावुक्तिश्च सूक्तिः=सुभाषितम्। सु-शब्देन चतुरम्, अदीनम्, कोकिलादिसदृशं गृह्यते। नीला=नीलवर्णा, सुदृक्=शुभदृक्, लोचनम्। सु-शब्देनात्र कमलपत्रसादृश्यादि गृह्यते। अणुश्चासौ शशी च तद्वदाभातीति तथा=बालेन्दुसदृशम्, भ्रूयुगम्=भृकुटियुग्मम्। शुभम्। शस्ता चासौ नासा च शस्तनासा। शस्तशब्देनात्र समसम्पुटा रुचिरा गृह्यते। सुकर्णौ शुभौ। सु-शब्देनात्र मांसलौ समौ च गृह्येते। नीलाः=नीलवर्णाः, आकुञ्चाः= आकुञ्चिताः, एककूपाः=एकैककूपकोत्पन्ना अलका यस्मिन् तत् नीलाकुञ्चैककूपालकम्। एवंविधं समं च तच्छिरश्च शुभम्। अर्धेन्दुरिव भालम्= ललाटम्, समम्=न तुङ्गं नापि निम्नं शुभम् ॥ २ ॥

तथा जिसका मध्य (कटि) तीन बलियों (रेखाओं) से युक्त हो, स्तन केशरहित हों, ग्रीवा शङ्ख के समान गोल हो, उरःस्थल (छाती) मृदु हो, ओष्ठ पके बिम्बफल के समान लालिमा (अरुणिमा) युक्त हों, दाँत कुन्दफल की तरह सफेद हों, वाणी (बोली) कोयल की तरह मीठी, प्यारी हो, आँखें नीली हों, भौंहें द्वितीया के चन्द्रमा की तरह वक्र हों, नाक देखने में सुन्दर हो, कान सुडौल हों, बाल काले और घुँघराले

हों, शरीर के प्रत्येक रोमकूप में एक एक ही रोम (पतले बाल) हों, शरीर की नाड़ियाँ (नसें) बाहर न दिखायी देती हों और जिसका मस्तक (ललाट) अर्धचन्द्राकार एवं बराबर हो ( ऊँचा-नीचा न हो )—ऐसी स्त्री ( गृहस्थ के लिये ) शुभ मानी जाती है ॥ २ ॥

**पद्माभौ गूढबन्धौ सुसमतलकरौ कृष्टपर्वांगुलीकौ,**
**मत्स्यच्छत्रादि राज्याय पदकरतले मूलतोऽप्यूर्ध्वरेखा ।**
**लध्वी मूलात् प्रदेशिन्यवधिरिह परायुःप्रदांगुष्ठमूले,**
**पुत्रा गुर्व्योऽप्यखण्डाः स्त्रिय इति सुकृशा वैकृतांकैर्दरिद्रम् ॥ ३ ॥**

**पद्माभाविति ।** पद्माभौ=पद्मसदृशौ, गूढौ=अतिगूढौ, मणिबन्धौ ययोस्तौ । सुसमम्=नातिनिम्नं नात्युन्नतम्, तलं ययोस्तौ करौ=हस्तौ शुभौ । पुनः कथम्भूतौ ? कृष्टानि=विकृष्टानि, विरलानि पर्वाणि यासां ताः कृष्टपर्वाणस्ता अङ्गुलयो ययोस्तौ कृष्टपर्वांगुलीकौ ।

अथ चरणतल-करतलरेखाणां फलमाह—**मत्स्यच्छत्रादि राज्यायेति ।** पदकरतले=चरणतले करतले वा मत्स्यच्छत्रादिकं ( चिह्नं ) राज्याय स्यात् । आदि-शब्देन शृङ्गारादि । तथा च वराहः—

शृङ्गारासन-वाजि-कुञ्जर-रथ-श्रीवृक्ष-यूपेक्षुभि-
र्मालाकुण्डलचामरांकुशयवैः शूलैर्ध्वजैश्चामरैः ।
मत्स्य-स्वस्तिक-वेदिका-व्यजनकैः शङ्खातपत्राम्बुजैः,
पादे पाणितलेऽथ वापि हृदये यान्ति स्त्रियो राज्ञिताम् ॥ इति ।

पदकरतले मूलतः=मूलमारभ्य अग्रपर्यन्तमूर्ध्वरेखाऽपि राज्याय स्यात् ।

अथ करतल एव रेखान्तराणां फलान्याह—**लध्वी मूलादिति ।** लघ्वी=कनिष्ठा, तस्या मूलमारभ्य प्रदेशिन्यवधिः=प्रदेशिनीपर्यन्ता रेखा, परायुःप्रदा=शतवर्षायुःप्रदात्री स्यात् । ततो यथा यथा न्यूना तथा तथा न्यूनत्वं कल्प्यम् । अंगुष्ठमूले या गुर्व्यः=महत्यो रेखाः, अखण्डाः=अच्छिन्ना यास्तत्समाः पुत्राः स्युः । अथ तत्रैव सुकृशाः अखण्डाः या रेखास्तत्समाः स्त्रियः=कन्यकाः स्युः । एतानि करतलगतान्येव; चरणतले त्वसम्भवात् । वैकृतांकैः=विकृतचिह्नैः क्रव्याद-काकपक्षिभिः शरीरस्थैः दरिद्रम्=दारिद्र्यं ज्ञेयम् । तथा च वाराहः—

"क्रव्यादरूपैर्वृक-काक-कङ्क-सरीसृपोलूकसमानचिह्नैः ।
शुष्कैः करालैः कठिनैश्च हस्तैर्भवन्ति नार्यः सुतवित्तहीनाः" ॥ इति ।

एतद्रेखाफलं स्त्रीणां वामभागे, पुंसामपि दक्षिणभागे स्पष्टं ज्ञेयम् । एतच्छुभलक्षणमुक्तम् । अतोऽन्यदशुभम् ॥ ३ ॥

जिसके मणिबन्ध (हस्तमूल=पोंहचा) कमल के समान रक्तवर्ण, दृढ बन्धन से युक्त हों, हाथ समतल (न ऊँचे न नीचे) हों, अंगुलियों के पर्व ( पौर ) अलग-अलग रेखाओं से अंकित हों, अंगुलियाँ मिली हुई हों, और जिसके (बाँये) हाथ में मछली और छत्र आदि की रेखायें हों, तथा हाथ पैर में पूर्ण ऊर्ध्वरेखा हों तो वह स्त्री राज्यसुख भोगती है।

जिसके हाथ में कनिष्ठा अंगुलि से तर्जनी तक जानेवाली रेखा हो वह दीर्घायु होती है! अंगूठे के मूल में जितनी पूरी विना कटी रेखाएँ हों उसके उतने ही पुत्र होंगे—ऐसा समझना चाहिये। एवं जितनी कटी हुई रेखाएँ हों उनसे उतनी कन्याओं की उत्पत्ति समझनी चाहिये। जिसके हाथ और पैर में विकृत (कौआ, चील, भेड़िया आदि के आकार वाली) रेखायें हो तो उसे सर्वथा दरिद्र समझना चाहिये ॥ ३ ॥

### कन्याया अतिदुष्टानि लक्षणानि

**अंगुष्ठोर्ध्वप्रदेशिन्यकुगलघुयुगा रोमयुक्शुष्कजङ्घा,**
**वामावर्त्ताऽल्पगुह्या घटनिभजठरा ग्रीवयाऽल्पाऽतिदीर्घा।**
**पापा दृक्पिङ्गलोला स्तनजकचवती लम्बभालोदरस्फिक्,**
**रोमाढ्योच्चोत्तरोष्ठी श्रुतिरदविषमा रूक्षकेशातिलम्बा ॥ ४ ॥**

तत्राप्यतिदुष्टानि लक्षणान्याह—अंगुष्ठेति। एवंविधा स्त्री, पापा=दुष्टा स्यात्। कीदृशी ? अंगुष्ठादूर्ध्वा=ऊर्ध्वङ्गता, प्रदेशिनी यस्याः सा तथा। अर्थाच्चरणस्था। कुम्=भूमिम्, गच्छतीति कुगं लघ्व्योर्युगम्; न कुगम् अकुगं लघुयुगं यस्याः सा तथा चरणगतकनिष्ठिकोपकनिष्ठिकाभ्यां भूमिं न स्पृशतीत्यर्थः। रोमयुजौ=रोमसहिते शुष्के=अस्निग्धे जंघे यस्याः सा तथा। वामे आवर्त्तो यस्य तद् वामावर्तम्, एवंविधमल्पं गुह्यम्=योनिः यस्याः सा तथा। घटनिभम्=कलशाकारम्, जठरम्=उदरं यस्याः सा तथा। ग्रीवया कृत्वा अल्पा, अतिदीर्घा=ह्रस्वग्रीवा अतिदीर्घग्रीवा चेयर्थः।

दृशोः=लोचनयोः, पिङ्गा च लोला च पिङ्गलोचना लोललोचना चेत्यर्थः। स्तनयोर्जाताः स्तनजाः, कचाः=केशा विद्यन्ते यस्याः सा। तथा—भालम्=ललाटम्, उदरम्=जठरम्, स्फिचौ=कटिप्रोथौ, लम्बा भालोदरस्फिचो यस्याः सा तथा। लम्बभाला, लम्बोदरी, लम्बस्फिगित्यर्थः। रोमाढ्या=रोमयुक्त-शरीरा, उच्चः=उन्नतः, उत्तरोष्ठो यस्याः सा तथा। श्रुतौ=कर्णौ, रदाः=दन्ताः, तैः। विषमाविषमकर्णविषमदन्ता चेत्यर्थः। रूक्षाः=स्निग्धाः केशा यस्याः सा तथा। "स्वाङ्गाच्चोपसर्जनात्" ( पा० सू० ४.१.५४ ) इति ङीपो विकल्पादतिलम्बा=अतिदीर्घा ॥ ४ ॥ इति स्त्रीलक्षणम् ॥

अब आचार्य कन्याओं के अपेक्षाकृत अतिनिकृष्ट लक्षणों का वर्णन कर रहे हैं— जिस स्त्री के अंगूठे के पास वाली अंगुली अंगूठे से अधिक लम्बी हो, और सबसे छोटी (पाँचवीं) अंगुली भूमि का स्पर्श न करे, जिसकी जाँघें सूखी (कृश) हों, तथा जिन पर बाल भी बहुतायत से उगे हुए हों, जिसकी योनि बाँयी तरफ घूमी हुई और सङ्कीर्ण हो, पेट घड़े की तरह फूला हुआ हो, ग्रीवा बहुत छोटी या बहुत लम्बी हो ऐसी स्त्री को पापा ( दुष्ट आचरण वाली ) समझना चाहिये। जिसकी आँखें माँजरी या मिच-मिची हों, जिसके स्तनों पर बाल हो, या जिसके मस्तक पेट या नितम्ब सीमा (औसत) से अधिक लम्बे हों, जिसके शरीर पर सर्वत्र अनपेक्षित बाल हों, जिसका ऊपर का ओठ अधिक निकला हुआ (लम्बा) हो, जिसके कान और दाँत बाँके-टेढे हों, जिसके शिर के बाल रूखे हों या जो बहुत अधिक लम्बी हो—ऐसी स्त्री को पापिनी (दुष्ट आचरणवाली) समझना चाहिये ॥ ४ ॥

स्त्री-लक्षण वर्णन पूर्ण हुआ ॥

## २. वर( पुरुष )लक्षणानि

**स्त्र्युक्तं नुर्लक्षणं किन्तु कच इह शुभो जङ्घयोश्चैककोऽल्पम्,**
**लिङ्गं शब्दाढ्यमूत्रं वृतमथ वृषणौ तुल्यलम्बौ च शुक्लम् ।**
**यत् स्यात् क्षारान्यगन्ध्युन्नतशुभमणिः सिंहकट्यल्पयामौ,**
**सद्गन्धा स्वेदकक्षा कचरहितभुजांसं सुपुष्टं च पृष्ठम् ॥ ५ ॥**

कन्यार्थमपि शुभलक्षणं वरं वरयेद्, अतस्तल्लक्षणमाह—स्त्र्युक्तमिति। स्त्रीणां यदुक्तं लक्षणं तदेव नुः=पुरुषस्य स्यात्; किन्तु इह=पुरुषविषये, विशेषो वक्ष्यते इत्यर्थः। जङ्घयोः कचः=केशः, शुभः स्यात्। 'शुभ' इति यथालिङ्गं यथावचनं चाग्रेऽपि सर्वत्र योजनीयम्। जातावेकवचनम्। रोमाणीत्यर्थः। 'जङ्घे विरोमे' इत्यस्यापवादोऽयम्। एककचश्च शुभः। शरीरे यत्र कुत्रापि एकैककूपके एकैकः केशः शुभ इत्यर्थः। अर्थात् द्वौ मध्यौ, त्र्यादयोऽतिदुष्टा इत्यर्थः। लिङ्गम्=मेढ्रम्, अल्पम्=ह्रस्वम्, शुभं स्यात्। शब्दाढ्यमूत्रम्=सशब्दमूत्रम्, वृत्तम्=पर्यावृतं च शुभं स्यात्। लम्बनं लम्बः, तुल्यौ लम्बौ ययोस्तौ वृषणौ शुभौ। क्षारान्यगन्धि यच्छुक्लं तच्छुभं स्यात्। क्षारादन्यः क्षारान्यः, तस्य गन्ध इव गन्धो यस्य तत् तथा। क्षारव्यतिरिक्तयुक्तमित्यर्थः। उन्नतः=उच्चः, सुष्ठु=शुभः, रक्तः स्निग्धश्च, समः=समानः। एवंविधश्चासौ मणिश्च स शुभः। मणिः=लिङ्गाग्रभागः। "मणिर्लिङ्गाग्रिमो भागो मणिः प्रोक्तो भगध्वजः" इति देवदत्तः। सिंहस्य

कटिरिव कटिः सिंहकटिः, अल्पयामः-अल्पमैथुनम्, तौ शुभौ। सन् गन्धो यस्याः सा सद्गन्धा। नास्ति स्वेदो यस्याः सा अस्वेदा। सद्गन्धा अस्वेदा चासौ कक्षा च सा शुभा। भुजौ च अंसौ च भुजांसम्। प्राण्यङ्गत्वादेक-वचनम्। भुजौ=बाहू, अंसः-स्तनबाह्योरन्तरप्रदेशः, तौ कचरहितौ=लोम-रहितौ शुभौ। पृष्ठं सुपुष्टम्—मांसलम्, शुभम् ॥ ५ ॥

वरलक्षण—"कन्या के लिये शुभ लक्षणों वाले वर (पुरुष) का चयन करना चाहिए"—शास्त्र का ऐसा भी आदेश है, अतः (अब) पुरुषलक्षणों का विस्तार से निरूपण किया जा रहा है—

यों तो हम पीछे जो स्त्रियों के लक्षण कह आये हैं, साधारणतः वही पुरुष के भी समझना चाहिये, फिर भी उन (पुरुषों) के कुछ विशेष लक्षण बता रहे हैं। पुरुष की जाँघों पर बालों का होना शुभ होता है। उसके एक रोमकूप में एक एक ही बाल होना चाहिये ( दो-दो या तीन-तीन नहीं ), उसकी मूत्रेन्द्रिय न अधिक लम्बी हो न अधिक छोटी। उसकी मूत्रधारा में शब्द (आवाज)हो और वह धारा गोल हो। उसके दोनों वृषण बराबर लम्बाई लिये हों (एक छोटा एक बड़ा नहीं), उसके मूत्र का रंग सफेद और उसकी गन्ध क्षारयुक्त न हो। उसकी मूत्रेन्द्रिय का अग्रभाग (मणि) उन्नत, देखने में प्रिय एवं स्पर्श में चिकनापन लिये हुए हो। कटि प्रदेश सिंह की तरह कृश (पतला) हो, उसकी पीठ मांसल हो—पुरुष के ये सब चिह्न शुभ कहलाते है ॥ ५ ॥

किञ्च—

शुण्डाभं बाहुजानुप्लवगसमकरौ सूक्तरेखौ सुताः, स्वम्,
मूलेऽगुष्ठे यवैः स्युः सुहसितवदनं श्लक्ष्णसौम्यं प्रलम्बौ।
रोमाढ्यौ पुष्टकर्णौ समपुटसरला नासिकाऽनग्रभिन्ना,
केशा नीलाः, सुदृष्टिः, सुगतिरपि शुभं मांसलाङ्गं शिरोनम् ॥ ६ ॥

शुण्डाभमिति। बाहू च जानुनी च बाहुजानु। प्राण्यङ्गत्वादेकत्वम्। तत् शुण्डाभम्=हस्तिशुण्डासदृशं सुखदम्। प्लवगः=कपिः, तेन समौ=सदृशौ करौ सुखदौ। सुष्ठु=सुखा, स्निग्धा, गभीरा, अन्तर्मधुपिङ्गला मनोहरा चेति। उक्ताः=प्रागुक्ताः, एवंविधा रेखा ययोस्तौ तथोक्तौ सुखौ। मूले=अंगुष्ठमूले, स्थितैः, यवैः सुताः स्युः। अंगुष्ठे स्थितैः यवैः स्वम्=धनम्, स्यात्। सुष्ठु हसितं यस्मिन् तद् वदनं श्लक्ष्णम्=चिक्कणम्, सौम्यम्=अनुग्रम्, च शुभं स्यात्। प्रलम्बौ=दीर्घौ, रोमाढ्यौ=सरोमकौ, पुष्टौ=मांसलौ। एवंविधौ कर्णौ सुखदौ। समौ-पुटौ यस्याः सा समपुटा, सरला=ऋज्वी, एवंविधा

नासिका सुखदा। न अग्रेषु भिन्ना अनग्रभिन्नाः, नीलाः—नीलवर्णाः, केशाः सुखदाः। सुष्ठु—सुखदा, अदीना—स्निग्धा विपुला च दृष्टिः सुखदा, सुगतिः—शार्दूलहंस-गज-वृषादितुल्यगतिः सुखदा। अपिः समुच्चये। यत्किञ्चिन्मांसलमङ्गं शिरोनम्—शिराहीनं तत् सुखदं स्यात् ॥ ६ ॥

भाग्यशाली पुरुष के बाहु और जानु हाथी की शूँड के समान लम्बे और गोल हों, हाथ बन्दर के समान चञ्चल (व सुडौल) हों, उन हाथों में पूर्वोक्त शुभ रेखाएँ भी होनी चाहिये। अंगुष्ठमूल में स्थित यवाकार चिह्नों से पुरुष के पुत्रों की संख्या और धन-सम्पत्ति की सीमा जाननी चाहिये। उसकी मुखाकृति हास्ययुक्त तथा सौम्य और स्निग्ध हो। कान भी लम्बे सुडौल एवं रोमयुक्त हों। नासिका के दोनों पुट समान हों। बाल काले हों और उनका अग्रभाग फटा हुआ न हो। दृष्टि में गम्भीरता, स्निग्धता एवं विपुलता (अदीनता) हो; चाल सिंह, हाथी या वृषभ (साँड़) के समान हो, उसके सभी अंग मांसल (पुष्ट) हों और उनकी नसें (नाड़ियाँ) न दिखायी दें। पुरुषों के अंगों में ये लक्षण शुभदायक माने जाते हैं ॥ ६ ॥

**पुरुषस्य द्वात्रिंशल्लक्षणानि**

**गम्भीरं सत्त्वनाभिस्वरमरुणनखाक्ष्योष्ठतालंघ्रिजिह्वा-**
**हस्तं पर्वद्विजत्वङ्नखकचकृशता पूर्णभालाननोरः।**
**दीर्घं नासाकुचान्तर्नयनहनुभुजं पृष्ठलिङ्गाढ्यजङ्घा-**
**ग्रीवाल्पोच्चं कृकाटी मुखनखयुगुरो राज्ञि कक्षा च नासा ॥ ७ ॥**

अथ पुरुषस्य द्वात्रिंशल्लक्षणान्याह—गम्भीरमिति। १. सत्त्वं च, २. नाभिश्च, ३. स्वरश्च—एतत् त्रयं गम्भीरम्—निम्नम्। प्राण्यङ्गत्वादेकत्वम्। एवमुत्तरत्रापि। १. नखाः, २. अक्षिणी, ३. ओष्ठौ, ४. तालु, ५. अंघ्री, ६. जिह्वा, ७. हस्तौ, एषां द्वन्द्वैकत्वम्। एतत्सप्तकमरुणम्—ताम्रम्। १. पर्वाणि—गात्रसन्धयः, २. द्विजाः—दन्ताः, ३. त्वक्—त्वचा, ४. नखाः प्रसिद्धाः, ५. कचाः—केशाः—एषां पञ्चानां कृशता—सूक्ष्मता। १. भालम्—ललाटम्, २. आननम्—मुखम्, ३. उरः प्रसिद्धम्। एतत् त्रितयं पूर्णम्—विस्तीर्णम्। १. नासा—नासिका, २. कुचान्तः—स्तनमध्यम्, ३. नयने—नेत्रे, ४. हनुः—चिबुकम्, ५. भुजौ—बाहू। एतत् पञ्चकं दीर्घम्। १. पृष्ठं च, २. लिङ्गं च, ताभ्यामाढ्या चासौ ३. जङ्घा च ४. ग्रीवा च अल्पा। पृष्ठ-लिङ्ग-जङ्घा-ग्रीवाः—एतानि चत्वार्यङ्गानि ह्रस्वानीत्यर्थः। १. कृकाटी—घोणा, २. मुखम्—आननं च, ३. नखाः प्रसिद्धाः, तैर्युक्तम्, ४. उरः, ५. कक्षा, ६. नासा च—एतत् षट्कम् उच्चम्—उन्नतम्। एतानि राज्ञि स्युः। एतल्लक्षणयुक्तो राजा स्यादिति भावः ॥ ७ ॥

पुरुष के ३२ शुभ लक्षण—पुरुष के १. सत्त्व, २. नाभि और ३ स्वर—ये तीन गम्भीर ही अच्छे होते हैं। १. नख, २. आँखें, ३. ओंठ, ४. तालु, ५. दोनों पैर ६. जिह्वा, ७. दोनों हाथ—ये सात अरुणिमा (ललाई) युक्त ही अच्छे लगते हैं। १. गात्र की सन्धियां (हड्डियों के जोड़) २. दाँत, ३. त्वचा, ४. नख एवं ५. केश, ये पाँच पतले ही अच्छे लगते हैं। १. ललाट २. मुख और ३. वक्षःस्थल—ये तीन पूर्ण (विस्तारयुक्त) ही शुभ माने गये हैं। १. नासिका, २. स्तनों का मध्यभाग, ३. दोनों नेत्र, ४. ठोढ़ी (हनु), ५. दोनों भुजाएँ—ये पाँच दीर्घ (लम्बे चौड़े) ही शुभ होते हैं। १. पीठ, २. मूत्रेन्द्रिय, एवं ३. जंघा और ४. ग्रीवा अधिक लम्बी न हों तो शुभ हैं। अर्थात् ये चारों अङ्ग ह्रस्व (छोटे) ही अच्छे माने गये हैं। १. गले की घाँटी, २. मुख, ३. नख, ४. छाती, ५. काँख और ६. नासिका—ये छह अङ्ग उन्नत ही शुभ कहे गये हैं। ये शुभ लक्षण राजाओं (या तत्समान पुरुषों) में ही पाये जाते हैं ॥ ७ ॥

इति स्त्रीपुरुषलक्षणम् ॥

## अरिष्टलक्षणानि, तन्नाशोपायश्च

**व्यस्ताङ्गादिस्वभावा भुवि च पददलं भाविकारोऽम्बु पूव**
**स्वस्थोऽब्जाङ्कं न पश्येत् तनुमितरदृशि स्वाक्षि वाऽऽपीड्य तेजः ।**
**ध्रौवादीन् वाऽथ पश्येद् भमहनि च तडिच्चापपूर्वं निरभ्रे,**
**सूर्येन्द्वोश्छिद्रपूर्वं मृतिकृतिरिह च मृत्युञ्जयाज्जाप्यहोमौ ॥८॥**

अथ वरस्य भाव्यरिष्टज्ञानार्थं स्वस्थारिष्टज्ञानमाह—व्यस्तेति। व्यस्ताः=विपरीताः, अङ्गादीनां स्वभावाः। अङ्गानि=हस्त-पाद-मुखादीनि। आदि-शब्देन बुद्धीन्द्रिय-प्रकृत्यादीनां ग्रहणम्। एषां स्वाभाविकानां व्यत्ययः। स्थूलोऽप्यकस्मात् कृशः, कृशोऽपि स्थूलः; वदान्यः कृपणः, कृपणोऽपि वदान्यः; द्रष्टा अनीक्षकः, अनीक्षकोऽपि द्रष्टेत्यादिः। भुवि=कर्दमभूमौ। पददलम्=पदखण्डम्। चः समुच्चये। अम्बुपूर्वे=जलतैलादर्शादिषु, छायाः=प्रतिबिम्बस्य, विकारः=शिरोहीनतादिः। स्वस्थः सन्=इति प्रत्येकं सम्बन्धः। अब्जाङ्कम्=चन्द्रलाञ्छनं न पश्येत्। इतरदृशि=अन्यलोचने, स्वां तनुं न पश्येत्। वा-शब्दः प्रत्येकं सम्बध्यते। स्वाक्षि=स्वनेत्रम्, अंगुलीभिः, आपीड्य तेजो न पश्येत्। ध्रुव एव ध्रौवः, ध्रौवादीन्=ध्रुव-नक्षत्रमाला-मातृका-चक्रादिकं न पश्येत्। अथ-शब्द उत्तरेण सम्बन्धार्थः। अहनि=दिवसे, भम्=नक्षत्रादि पश्येत्। निरभ्रे=घनरहिते आकाशे, तडिच्चापपूर्वम्=विद्युदिन्द्रधनुः-परि-वेषादिकं पश्येत्। सूर्येन्द्वोः=सूर्यचन्द्रबिम्बयोः, छिद्रादिकम्=छिद्र-खण्डित-

वर्णव्यत्ययादिकं पश्येत् । एतत् प्रत्येकं मृतिकृत् स्यादल्पीयसि काले । इह=अस्मिन् सति, मृत्युञ्जयात्=मृत्युञ्जयमन्त्रेण, जाप्य-होमौ, यथाविधि कार्यौ, ततस्तस्य अरिष्टनाशो भवेदिति ॥ ८ ॥

नानाशास्त्रक्रियाकलापचतुरः श्रीकेशवो दैवविल्-
लक्ष्मीजानिरवाप्तकीर्तिरवनौ मौहूर्ततत्त्वं व्यधात् ।
अस्मिंस्तत्तनुभूगणेशरचिते तस्यामले प्रस्फुटे,
व्याख्याने निरगादिह प्रकरणे स्त्रीपुंसयोर्लक्षणम् ॥

इति श्रीसकलागमाचार्यकेशवसाम्वत्सरात्मज-
गणेशदैवज्ञविरचितायां मुहूर्ततत्त्वटीकायां
स्त्रीपुंसयोर्लक्षणं समाप्तम् ॥

अब आचार्य वर के उन भावी मृत्युसूचक लक्षणों का वर्णन प्रारम्भ कर रहे हैं जिनकी निवृत्ति उपायसाध्य है—स्वस्थ पुरुष के हाथ, पैर, मुख आदि या बुद्धि एवं इन्द्रियों की स्वाभाविक गतिविधियों में अकारण अन्तर आने लगे, रेतीली या कीचड़ वाली जमीन पर उसके पदचिह्न पूरे न उभरें, जल या तैल आदि में देखने पर मुख का प्रतिबिम्ब दिखायी न दे या कुछ विकृत दिखायी दे, चन्द्रमा के मध्य का काला चिह्न, या दूसरे की आँखों में अपनी मुखाकृति न दिखायी दे, अपनी आँखों को हाथों से मसलने पर झिलमिल(तारों भरा) सा प्रकाश न दिखायी दे, वह आकाश में (रात्रि के समय) ध्रुव आदि प्रकाशमान नक्षत्रों को भी न देख पावे, या फिर न हुआ इन्द्रधनुष या बिजली की चमक दिखायी देने लगे, सूर्य या चन्द्रमा का आकार छिद्रयुक्त दिखायी दे—ऐसे सभी लक्षण मनुष्य की भावी मृत्यु के सूचक (अरिष्ट) होते हैं । इनके निवारण हेतु रोगी के निमित्त मृत्युञ्जय मन्त्र[1] का शास्त्रोक्त विधि से न्यासपूर्वक जप या इसी मन्त्र से होम करना चाहिये ॥ ८ ॥

---

१. महामृत्युञ्जय मन्त्र—"ॐ हौं ॐ जूं सः भूर्भुवः स्वः त्र्यम्बकं यजामहे, सुगन्धिं पुष्टिवर्धनम् ।
ऊर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् भूर्भुवः स्वरौ जूं सः हौं ॐ ॥
अथवा लघुमृत्युञ्जय मन्त्र—"ॐ हौं जूं सः ( व्यक्ति का नाम बोले ) पालय पालय सः जूं हौं ॐ" ।

: ५ :

## परिशिष्टोंऽश:

१. अंगेषु पल्लीपतनविचारः

२. अंगेषु सरटारोहणविचारः

३. अंगस्फुरणविचारः

# अंगेषु पल्लीपतनादिविचारः

## १. अङ्गेषु पल्लीपतनम्

**शीर्षे भाले च पल्ली पतति यदि नृणां दक्षिणाङ्गे शुभाप्त्यै,**

**वामे हानिः,**

अथ स्वस्थारिष्टप्रसङ्गेन पल्लीपतन-सरटारोहणयोः फलमाह—शीर्ष इति। नृणाम्=पुरुषाणाम्, शीर्षे-शिरसि, भाले=ललाटे, तद्व्यतिरिक्ते दक्षिणाङ्गे च, पतति, तदा शुभाप्त्यै=शुभप्राप्त्यै, भवति। शीर्षभालव्यतिरिक्ते वामाङ्गे यदि पल्ली पतति तदा हान्यै भवति॥

आचार्य इसी (ग्रन्थान्तर्गत स्वस्थारिष्ट) प्रसङ्ग में शरीर पर पल्ली (छिपकली) गिरने या सरट (गिरगिट=किरकाट) के आरोहण (चढ़ने) का विचार कर रहे हैं—पुरुषों के सिर या मस्तक अथवा किसी अन्य दक्षिण अङ्ग पर पल्ली का पतन हो तो वह शुभ फलदायक होता है। और सिर या मस्तक को छोड़ कर किसी अन्य वाम अङ्ग पर पल्लीपतन हो तो वह अशुभ (हानि) प्रद होता है।

## २. सरटापतनमारोहणं वा

**विलोमं सरटजपतने योषितां व्यस्तमेतत्।**

**व्यस्तं रोहे,**

सरटजपतने—विलोमम् =उपर्युक्ततो विरुद्धम्। तद्यथा—शीर्षे भाले च शुभम्, तद्व्यतिरिक्ते दक्षिणांगे अशुभम्। वामांगे शुभमिति एतद्=उक्तं योषिताम्-स्त्रीणाम्, व्यस्तम्, तदयथा—शीर्षे भाले च पल्लीपतनम्, सरटपतनं वा शुभम्। दक्षिणाङ्गे च पल्लीपतनमशुभम्, वामाङ्गे शुभम्। सरटपतनं दक्षिणाङ्गे शुभम्, वामाङ्गेऽशुभम्।

एतदपि पल्लीसरटजपतनयोर्दक्षिणवामाङ्गजं फलंरोहे-आरोहणे व्यस्तं-विरुद्ध स्यात्। शीर्ष-भालयोस्तु सदा शुभमेव।

परन्तु शरीर के किसी अङ्ग पर गिरगिट के गिरने पर, ऊपर कहे से विरुद्ध समझना चाहिये। जैसे—सिर या मस्तक पर छिपकली या गिरगिट का किधर भी गिरना शुभ ही होता है। इससे अतिरिक्त, दक्षिण अंग पर गिरगिट का गिरना शुभ होता है और बाँये अंगों पर गिरना अशुभ होता है—ऐसा गिरगिटपतन पर विचार करते समय स्त्रियों के विषय में कहना चाहिये।

हाँ, छिपकली या गिरगिट का शरीर के किसी अंग पर चढ़ने का मिला-जुला प्रभाव होता है। उनका सिर या मस्तक पर चढ़ना तो शुभ ही होता है।

पल्लीपतन-अङ्गस्फुरण विचार पूर्ण ॥

### ३. एतज्जन्याशुभनिवारणोपायाः

**अत्र चेशानकनकसरटीयागजाप्याज्यलोकाः,**

अत्र=अस्मिन् (सरटस्य) पतनें, आरोहणे वा सति, ईशानः=शिवः, कनकसरटी=स्वर्णसरटी, तयोर्यागः=पूजा, तदर्थं होमश्च, जाप्यं मृत्युञ्जय-मन्त्रादिना, आज्यलोकः=धृतावलोकनम्, ततस्तद् दानम्। एतदस्मिन् अशुभफलदोषशान्त्यर्थं शुभेऽपि शुभफलसिद्ध्यर्थं कार्यम्। सविस्तरं तु शान्त्यादिकं नारदादयुक्तं ज्ञेयम्।

मनुष्य के किसी भी अङ्ग पर इस गिरगिट के पतन या आरोहण पर १. भगवान् शिव की या सुनहरी गिरगिट की पूजा करनी चाहिये। उसके लिये हवन करना चाहिये। या २. उस अशुभ की शान्ति के लिये महामृत्युञ्जय मन्त्र का जाप करना चाहिये। या फिर ३. घी में अपना मुखप्रतिबिम्ब देखना चाहिये, और बाद में वह घी उचित पात्र को दान में दे देना चाहिये। इसके विस्तृत शान्त्युपाय नारदादिपुराणों में कहे गये है। जिज्ञासु को इनका अवलोकन वहीं करना चाहिये।

### ४. अङ्गस्फुरणफलम्

**नुर्दक्षेऽन्यत्र नार्याः स्फुरितमपि शुभं भालशीर्षेऽथ नान्यत् ॥ ४ ॥**

अथैतत्प्रसङ्गेन अङ्गस्फुरणकालमाह—नुर्दक्षे इति। नुः=पुरुषस्य, दक्षे=दक्षिणाङ्गे; नार्याः=स्त्रियाः, अन्यत्र-वामाङ्गे, स्फुरितम्=स्फुरणं शुभं स्यात्। भावेक्तः। भाले=शीर्षेऽपि शुभं नार्याः पुरुषस्यापि। अतोऽन्यत् अशुभं ज्ञेयम्। तद्यथा—शीर्ष-भालव्यतिरिक्ते पुंसो वामाङ्गे, स्त्रियो दक्षिणाङ्गे स्फुरणमशुभम् ॥

इति पल्लीपतनसरटारोहणाङ्गस्फुरण विचारः ॥

आचार्य इसी प्रसङ्ग में स्त्री-पुरुषों के अङ्गो के स्फुरण (फड़कना) पर भी विचार कर रहे हैं—पुरुष का दाहिना और स्त्री का बाँया अङ्ग स्फुरित होने पर शुभ होता है। हाँ, पुरुष या नारी के सिर या मस्तक में कहीं भी या किधर भी स्फुरण होना शुभ ही होता है। इसके अतिरिक्त अशुभ समझना चाहिये। कहने का तात्पर्य यह है कि शिर या मस्तक के अतिरिक्त पुरुषों के वाम और स्त्रियों के दक्षिण अङ्गों का स्फुरण अशुभ होता है ॥

पल्लीपतन, सरटारोहण एवं अङ्गस्फुरणविचार सम्पन्न ॥

अङ्गविद्यायामागतानां

# श्लोकानां सूची